इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः ॥ २४
एवं तौ सहितौ भूत्वा सर्वार्थेष्वेकनिश्चयौ ।
तिलोत्तमार्थे संक्रुद्धावन्योन्यमभिजघ्नतुः ॥ २५
तस्माद्ब्रवीमि वः स्नेहात्सर्वान्भरतसत्तमान् ।
यथा वो नात्र भेदः स्यात्सर्वेषां द्रौपदीकृते ।
तथा कुरुत भद्रं वो मम चेत्प्रियमिच्छथ ॥ २६
वैशंपायन उवाच ।
एवमुक्ता महात्मानो नारदेन महर्षिणा ।
समयं चक्रिरे राजंस्तेऽन्योन्येन समागताः ।
समक्षं तस्य देवर्षेर्नारदस्यामितौजसः ॥ २७
द्रौपद्या नः सहासीनमन्योन्यं योऽभिदर्शयेत् ।
स नो द्वादश वर्षाणि ब्रह्मचारी वने वसेत् ॥ २८
कृते तु समये तस्मिन्पाण्डवैर्धर्मचारिभिः ।
नारदोऽप्यगमत्प्रीत इष्टं देशं महामुनिः ॥ २९
एवं तैः समयः पूर्वं कृतो नारदचोदितैः ।
न चाभिघ्नन्त ते सर्वे तदान्योन्येन भारत ॥ ३०

इति श्रीमहाभारते आदिपर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

नाहरिष्यति; T3 G3.5 आहरि°; M3.5 न हरि°. K2 वशे चैव करिष्यति.

24 Before 24, T1 G1.2 M ins. नारदः. — [a]) Ś1 K0.2.4 D5 वरान्. Ñ1 M6–8 प्रादात् (for दत्त्वा). — [c]) Ś1 K1 इंद्र त्रैलोक्यराज्याय.

25 Before 25, K2.3 Ñ2.3 V1 B D (except D5) ins. नारद उ°. — [b]) Da °ष्वेकधारिणौ. — [c]) Ñ V1 B1.3 Dn D1.2 G1 °त्तमार्थे.

26 [ab]) K3 transp स्नेहात् and सर्वान्. Ś1 K0.1.3 Ñ2.3 B3 D (except D5) °सत्तमाः; K4 °सत्तम. — [c]) Ś1 K (except K3) D5 वो न (K0.3.4 D5 न वो) विरोधः स्यात्. — [e]) D5 कुरुध्वं. — [f]) M6–7 प्रीतिमिच्छथ. — After 26, S ins.:

2011* यथा सुन्दोपसुन्दाभ्यां तथा न स्याद्युधिष्ठिर ।

27 Ś1 K1.3.4 S om. उवाच. — [a]) K (except K3) Ñ1 D5 सुरर्षिणा. — [d]) K3 ते चान्योन्यं; B5 तेन्योन्यस्य; D6 ततोन्योन्यं. G2 M समाहिताः. Ñ2.3 B1.3.6 Da Dn D1.2.4 तेन्योन्यवशमागताः. — [e]) B4 G1 M तस्य विप्रर्षेर्. — [f]) D4 °स्य महौजसः. — After 27, D4 (marg. *sec. m.*) S ins.:

2012* एकैकस्य गृहे कृष्णा वसेद्वर्षमकल्मषा ।

28 [a]) S च (for नः). Ś1 K (except K3) Ñ1 D5 नः समा(Ś1 सममा)सीनं (K3.4 °सीनः); Ñ2 V1 B (except B1) D (except D1.5) नः सहासीनान्. — [b]) K0.3.4 D5 योभिलक्षयेत्; S यो वि(M3.6 -पि)दर्श°. — [c]) K3 स वै; G3 स ह; M ततो. T G3–4.6 वै मासान्; G1 M6–8 मासानि; G6 मासान्वै; M3.5 मासान्स (for वर्षाणि). — [d]) K3.4 S व्रतचारी.

29 [a]) Ś1 K1 कृतेन; Ñ1 D5 T G (except G1) कृते च. — After 29[ab], D4 (marg. *sec. m.*) S ins.:

2013* ततः स भगवांस्तत्र पाण्डवैरर्चितः प्रभुः ।

— [cd]) K4 T G3–6 नारदोभ्यगमत्. Ś1 K (except Ñ1 D5 महानृषिः; B5 महामतिः; G3 महाद्युतिः. G निर्ययौ तु शुभे काले इंद्रप्रस्थं महातपाः.

30 [ab]) Ś1 स (for तैः). B1.5 M (except समयं. V1 समये राजन् कृते. K0.2.3 D1.5 नारदनोदि Ñ1 °चोदितः. — [c]) G1 M येन भेदं न जग्मुस्ते. — G3–4 तथा; G1.5 यथा (for तदा). Da D4 अन्योन्ये भारत. — After 30, D4 (marg. *sec. m.*) S ins.:

2014* एतद्विस्तरतः सर्वमाख्यातं ते नरेश्वर ।
काले च तस्मिन्संपन्नं यथावज्जनमेजय ।

Colophon. *Major parvan:* T3 G M संभव° (f आदि°). — *Sub-parvan:* K0 राज्यलंभ (followed सुंदोपसुंदोपाख्यान); T1 संभव. Ś1 K1–4 Ñ3 B Dn1.n2 D1.2 4.5 M3 5 (all om. the sub-parvan nam mention only सुंदोपसुंदोपाख्यान; to it K0.1 Ñ3 D1.5 M3 add समाप्त. — *Adhy. name:* K0.4 पांडव( °वानां)समयः; K3 पांडवानां प्रतिज्ञा. — *Adhy. no.* (*figure* words or both): Dn3 211; D3m 221; D5 162; 218, T3 G1.4 172, G2 169; G3 173; G5 6 M 17 — *Śloka no.*: Dn 31; M3 33. — *Aggregate śloka no.*: Dn3 7720.

## 205

1 Ś1 K D5 S om. उवाच (K0 om. the ref.).

3 [a]) K3 ततः सा तैश्च; B3 Da D1 T G3–4 अनुयातैश्च Ñ1 अनुयाता: पंचभिश्च; D5 अनुयातैश्च वीरैश्च. — [b]) K0 transp. सह and पञ्चभिः. Ñ1 साध्वी वै पतिभिः सह. — [d]) Ñ1 V1 नागीभोगवती यथा.

## २०५

वैशंपायन उवाच।

एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः ।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः ॥ १
तेषां मनुजसिंहानां पञ्चानाममितौजसाम् ।
बभूव कृष्णा सर्वेषां पार्थानां वशवर्तिनी ॥ २
ते तया तैश्च सा वीरैः पतिभिः सह पञ्चभिः ।
बभूव परमप्रीता नागैरिव सरस्वती ॥ ३
वर्तमानेषु धर्मेण पाण्डवेषु महात्मसु ।
व्यवर्धन्कुरवः सर्वे हीनदोषाः सुखान्विताः ॥ ४
अथ दीर्घेण कालेन ब्राह्मणस्य विशां पते ।
कस्यचित्तस्कराः केचिज्जह्रुर्गा नृपसत्तम ॥ ५
ह्रियमाणे धने तस्मिन्ब्राह्मणः क्रोधमूर्छितः ।
आगम्य खाण्डवप्रस्थमुदक्रोशत पाण्डवान् ॥ ६
ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः ।
प्रसह्य चोऽस्माद्विषयादभिधावत पाण्डवाः ॥ ७
ब्राह्मणस्य प्रमत्तस्य हविर्ध्वाङ्क्षैर्विलुप्यते ।
शार्दूलस्य गुहां शून्यां नीचः क्रोष्टाभिमर्शति ॥ ८
ब्राह्मणस्वे हृते चोरैर्धर्मार्थे च विलोपिते ।
रोरूयमाणे च मयि क्रियतामस्त्रधारणम् ॥ ९
रोरूयमाणस्याभ्याशे तस्य विप्रस्य पाण्डवः ।
तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनंजयः ॥ १०
श्रुत्वा चैव महाबाहुर्मा भैरित्याह तं द्विजम् ।
आयुधानि च यत्रासन्पाण्डवानां महात्मनाम् ।
कृष्णया सह तत्रासीद्धर्मराजो युधिष्ठिरः ॥ ११
स प्रवेशाय चाशक्तो गमनाय च पाण्डवः ।
तस्य चार्तस्य तैर्वाक्यैश्चोद्यमानः पुनः पुनः । C. 1. 7750 B. 1. 213. 14 K. 1. 233. 14

---

4 a) Da D4 धर्मेषु. — c) K (except K2) व्यचरन्; T G (except G1) बभूवुः (for व्यवर्धन्). — d) G3 गुणान्विताः.

5 b) Ś1 K (except K2) Da Cd निवेशने; D3 निवेशनाद् (for विशां पते). — cd) K2 Ñ2.3 B D (except D3) transp. केचित् and जह्रुः. K1.3 D4 M5 गां; G1 तां. Ś1 गां जह्रुर्; G2 आजह्रुर् (for जह्रुर्गा). T1 जह्रुर्धनमरिंदम (for d).

6 K4 om. 6c–7b. — c) K1 T1 आगत्य. — d) Ñ1.2 B1.6 Da Dn1.n2 D2.4.5 उदक्रोशस्त; T1 तदाक्रोशत. Dn3 D3 °क्रोशत्समाविशत्.

7 Before 7, S ins. ब्राह्मणः. — K4 om 7ab (cf. v. l. 6). — a) B3 नीयते. T2 G3–4 रौद्रैर् (for क्षुद्रैर्). — c) T2 G (except G1) M5 प्रगृह्य. K2 Ñ3 V1 B3.4.6 Da D1.2.4 चोद्य विष°; Ñ1 विषयादस्मा; Ñ2 B1 Dn चास्मद्वि°; D5 G3 M3.4.7 वोऽस्मद्वि°; T1 नोऽस्माद्वि°. — d) Ñ2 Dn D5 अभ्यधावत; B5 अभिरक्षत; T G (except G1) अभिधावंति.

8 a) K2 °स्य हि तद्राजन्; K4 B1.3.5 D5 T G °स्याप्रम°; Ñ2 B6 Dn D1.2.4 M5 °स्य प्रशांतस्य; Cd as in text. — b) Ñ2 Dn प्रलुप्यते; G3.6 विलुंपते; Cd as in text. — d) Ś1 K1 °भिमर्षति; K0.4 Ñ1.2 B1.6 Dn D1.3.4 °भिमर्दति; K2 Ñ3 V1 B5 Da °भिपद्यते; K3 °भिनर्दति; B3 °चपद्यते; T G3–6 °तिमन्यते. G1.2 M अभि(G1.2 M5 अधि)तिष्ठति (G3 M3.6 °ष्ठंति) जंबुकः (G2 M3.5 °काः). Cd cites क्रोष्टा. — After 8, K3.4 Ñ V1 B D (D3 om. line 2) ins.:

2015* अरक्षितारं राजानं बलिषड्भागहारिणम् ।
समाहुः सर्वलोकस्य समग्रं पापचारिणम् ।

[(L. 1) Ñ1 रक्षितारं च राजानं. — (L. 2) K3 नृशंसं (for समग्रं). N3 V1 B1.3 D5 पापकारि°. K4 समग्रमलहारकं.]

9 b) S °यौ च विलोपितौ (M5 °घातितौ). — d) Ś1 K0.1.4 Cd हस्तधारणं; Ñ1 V1 M5 शस्त्रधारणं; Ñ2 Da Dn हस्तधारणा; D5 शस्त्रधारिणा; Arjp as in text.

10 Before 10, all MSS. ins. वैशं° उ° (resp. वैशं°). — a) A few MSS. °भ्यासे. — b) Ś1 K0.1.4 Ñ Dn D1.2.5 भृशं (for तस्य). — c) G3.6 तानि शुश्राव यान्याह.

11 a) N (except Ś1 K1) transp. च and एव. S श्रुत्वार्जुनो महा°. — c) Ś1 K0.3.4 Ñ2 B1 Dn D5 तत्रास्ते; K1 Ñ1 V1 तत्रास.

12 a) K2 Ñ V1 B3.6 Dn D2.4 M3 संप्रवे°. — b) Ñ1

आक्रन्दे तत्र कौन्तेयश्चिन्तयामास दुःखितः ॥ १२
ह्रियमाणे धने तस्मिन्ब्राह्मणस्य तपस्विनः ।
अश्रुप्रमार्जनं तस्य कर्तव्यमिति निश्चितः ॥ १३
उपप्रेक्षणजोऽधर्मः सुमहान्स्यान्महीपतेः ।
यद्यस्य रुदतो द्वारि न करोम्यद्य रक्षणम् ॥ १४
अनास्तिक्यं च सर्वेषामस्माकमपि रक्षणे ।
प्रतितिष्ठेत लोकेऽस्मिन्नधर्मश्चैव नो भवेत् ॥ १५
अनापृच्छ्य च राजानं गते मयि न संशयः ।
अजातशत्रोर्नृपतेर्मम चैवाप्रियं भवेत् ॥ १६
अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम ।
अधर्मो वा महानस्तु वने वा मरणं मम ।
शरीरस्यापि नाशेन धर्म एव विशिष्यते ॥ १७
एवं विनिश्चित्य ततः कुन्तीपुत्रो धनंजयः ।
अनुप्रविश्य राजानमापृच्छ्य च विशां पते ॥ १८
धनुरादाय संहृष्टो ब्राह्मणं प्रत्यभाषत ।
ब्राह्मणागम्यतां शीघ्रं यावत्परधनैषिणः ॥ १९
न दूरे ते गताः क्षुद्रास्तावद्गच्छामहे सह ।
यावदावर्तयाम्यद्य चोरहस्ताद्धनं तव ॥ २०
सोऽनुसृत्य महाबाहुर्धन्वी वर्मी रथी ध्वजी ।
शरैर्विध्वंसितांश्चोरानवजित्य च तद्धनम् ॥ २१

---

भारतः (for पाण्डवः). S गंतुमिच्छंश्च (T2 G1.4 M3 °च्छन्स) पांडवः. — °) M6-8 वै (for तैर्). — °) Dn3 D1.3 °क्रंदेन तु; T G4 °क्रंदने च; G2.3.5.6 °क्रंदेन च. — f) B Da D1.3.4 चिंतयानः सुदुः°.

13 a) T2 G2-4 ह्यस्मिन्. — S transp. 13cd and 14ab. — c) Ñ1 अश्रुसं°; S आसप्र°. K0.3.4 चास्य. — d) K1.3 Ñ3 B6 निश्चितं; K2.4 Ñ2 V1 Dn1.n3 D4 S निश्चयः.

14 Ñ2 om. 14a–16b. S transp. 13cd and 14ab — a) Ñ3 V1 Dn2 M3.5 उपक्षेपण°; T2 G3-6 उपप्रेपण°; Cd as in text. — c) K2 Ñ1 T1 G2 यदस्य. Ś1 K1 भवतो; M3.5 रुवतो. — d) G1 अस्य (for अद्य).

15 Ñ2 om. 15 (cf. v. l. 14). — a) B6 अनाशस्त्वं च; S नास्तिक्यं चापि; Cd as in text. — b) K3 °कं प्रति रक्ष°; Ñ3 °कं चाप्यर°; B1.3.5 °कमपर°; B6 Da °कं स्यादर°; D1.2 °कं च स्वर°; S °कं स्यादधर्मजं. — c) K3 अप्रतिष्ठति; K4 प्रतितिष्ठति; N3 B (B3 m as in text) D1.2.4.5 प्रतिष्ठितश्च (B3 m प्रतितिष्ठेच); Cd as in text. — d) Ñ1 अधर्मश्च बहुर्भवेत्.

16 Ñ2 om. 16ab (cf. v. l. 14); M6-8 om. 16c–17d. — a) Ś1 K1 अनापृत्य; K3.4 N1.2 V1 B D अनादृत्य (D3 अनापृष्ट्वा). Ś1 K1 Ñ3 V1 B3 Dn D5 तु; T G (except G1) एव (for च). — c) K4 Ñ3 B सुमहान्; V1 Da D1.2.4 सुमहन् (for नृपतेर्). — d) Ñ3 V1 Dn M3 मयि (for मम). Ś1 K (except K3) Ñ1.2 V1 Dn चैवानृतं.

17 M6-8 om. 17abcd (cf. v. l. 16). — a) G1 °प्रवेशाद्. N1 D1.3 च (for तु). — After 17ab, N ins.:

2016* सर्वमप्यल्पपरिहर्तं धर्षणात्तु महीपतेः ।

[ Ś1 K3 दर्शने (for धर्षणात्). ]

— c) B6 Dn1.n2 M3 वै; Da वो (for वा). K0.3.4 महानद्य. — d) K2.4 Ñ1.2 V1 B2.6 D (except Dn) गमनं (for मरणं). Ś1 K1 वनवासोपि वा मम; G1 M3.5 वनवासो भवेन्मम (= b). — e) Ś1 K0.3.4 Ñ1.2 Dn D5 G1 M °रस्य विनाशेन; K2 °रस्य विनाशे वा; T G3-6 °पि नाशात्तु; G2 °पि नाशक्तुं (sic). — f) K3 प्रशस्यते.

18 b) G1 युधिष्ठिरः (for धनं°). — After 18ab, K3 ins.:

2017* मुखमाच्छाद्य निबिडमुत्तरीयेण वाससा ।

— c) K3 अंतः प्रविश्य; G1 अभिप्र°; M3 inf. lin. अनापृच्छ्य च. — d) K2 Ñ2 B2.3 Da D1.2.4 आमंत्र्य च; V1 आपृच्छत. T1 G1 M अभिवाद्याशु निःसृतः; T2 G2-4 अभिवाद्य गुरुं स्थितं; G5.6 अभिवाद्य विनिःसृतः.

19 a) V1 धनुरत्यस्य. — Before 19cd, S ins. अर्जुनः. — d) Ś1 K1 यावत्पापा धनै°.

20 a) Ñ1 D1.2.4 दूरं. K1 न दूरतो गताः क्षु°; K2.4 V1 B (except B6) Da न दूरानुगताः क्षु°; T G अदूरात्त्वगताः क्षु° (G1 दूराद्गवंतः क्षुद्रास्ते); M3 दूरं भजंति न क्षुद्राः; M4 न दूरभाजिनः क्षु°; M6-8 न दूरं भवतः क्षु°. — b) K0 Ñ1.2 B1.6 D (except D3) गच्छावहे सह; K3 °च्छाम वै स°; Ñ3 V1 B6 °च्छाव वै स°; B3 °च्छाव चैव ह; T2 G3 (by corr.) °च्छाव वैः स°. M3 तावद्यास्यामि तत्र वै. — c) K0.3.4 Ñ3 Dn1.n2 D4 यावन्निवर्ते°; K3 यावदापादया°. — d) N (except Dn2 D4) चौर°. G1 M चोरहस्तगतं धनं.

21 M6-8 om. 21–22. Before 21, T G ins. वैशं°. — a) B3 सोवरात्य. — b) Ś1 K0 वर्मी; K2 चर्मी (for धन्वी). Ś1 K0.4 चर्मी; K2 Ñ3 B D (except Dn) रथी (for वर्मी). Ś1 K (except K3) रथी; Ñ1 सर्म (for रथी). K0.2.4 रथी (for ध्वजी). — c) Ś1 विध्वस्ति°; K0.3.4 Ñ

ब्राह्मणस्य उपाहृत्य यशः पीत्वा च पाण्डवः ।
आजगाम पुरं वीरः सव्यसाची परंतपः ॥ २२
सोऽभिवाद्य गुरून्सर्वांस्तैश्चापि प्रतिनन्दितः ।
धर्मराजमुवाचेदं व्रतमादिश्यतां मम ॥ २३
समयः समतिक्रान्तो भवत्संदर्शनान्मया ।
वनवासं गमिष्यामि समयो ह्येष नः कृतः ॥ २४
इत्युक्तो धर्मराजस्तु सहसा वाक्यमप्रियम् ।
कथमित्यब्रवीद्वाचा शोकार्तः सज्जमानया ।
युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमच्युतम् ॥ २५
प्रमाणमसि यदि ते मत्तः शृणु वचोऽनघ ।
अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम् ।
सर्वं तदनुजानामि व्यलीकं न च मे हृदि ॥ २६
गुरोरनुप्रवेशो हि नोपघातो यवीयसः ।
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः ॥ २७
निवर्तस्व महाबाहो कुरुष्व वचनं मम ।
न हि ते धर्मलोपोऽस्ति न च मे धर्षणा कृता ॥ २८

अर्जुन उवाच ।

न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम् ।
न सत्याद्विचलिष्यामि सत्येनायुधमालभे ॥ २९

वैशंपायन उवाच ।

सोऽभ्यनुज्ञाप्य राजानं ब्रह्मचर्याय दीक्षितः ।
वने द्वादश वर्षाणि वासायोपजगाम ह ॥ ३० C. 1. 7775 B. 1. 213. 8 K. 1. 233. 3

इति श्रीमहाभारते आदिपर्वणि पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

---

V1 B1 Da1 Dn1.n2 G5.6 M3.5 विध्वस्य तान्. K1.4 B5 Da2 D4.5 T2 G1.2.4 विध्वंस्य तान्. Many MSS. चौरान्. — c) K4 स निर्जित्य; B3 Da Dn3 D2.4.5 विनिर्जित्य. Ś1 °त्य धनं च तत्.

22 M6-8 om. 22 (cf. v. l. 21). — a) Ś1 K3 N1 D1.2 G1.4 (by corr.) °णस्यमुपा°; K0 B1.3 °णस्यमुपावर्त्य; K1 °णस्यमुपादाय; K3.4 B3.6 °णस्यमुपावृत्य; Ñ2 Dn D4 °णं समुपाकृत्य; Ñ3 °णस्वं स्वमादाय; V1 Da °णस्यमुपाकृत्य; D5 °णं समुपावर्त्य. — b) K4 Ñ V1 B D T2 G4 (by corr.) प्राप्य; Cd (?)पात्वा (=रक्षित्वा) (for पीत्वा). — After 22ab, K2-4 Ñ V1 B D ins.:

2018* ततस्तद्गोधनं पार्थो दत्त्वा तस्मै द्विजातये ।

— c) Ś1 K1 पुरीं; K2 Ñ1 V1 Da Dn2 D1.2.4 पुनर्. — d) Ś1 K1 परंतप; K2 Ñ2 Dn T2 G (except G1) धनंजयः.

23 Before 23, T1 M6-8 ins. वैशं°. — a) Ś1 K1 G1 कुरून् (for गुरून्). — b) K0.4 Ñ2 Dn1.n2 D2 सर्वैश्चाप्यभिनंदितः; K3 D1 तैश्चाभिप्रति°; Ñ3 तैश्चैव प्रति°. — d) D2 धर्मं (for व्रतं). K0.3.4 Ñ3 व्रतमादिश मे प्रभो.

24 b) K (except K1) Ñ V1 B D °दर्शने; T G (except G1) भवतो दर्शनात्. S मम (for मया).

25 b) T G (except G1) वाक्यमब्रवीत्. — T2 G4 om. 25cdef. — c) K3 चाथ; K4 Da M6-8 राजा; D2 वाचं (for वाचा). — d) D2 °तैः सक्तमानसः; G1 शोकात्सं-सज्ज°. — f) V1 Da D1.2 इत्युत; S (T2 G4 om.) अब्रवीत् (for अच्युतम्). — After 25, K3.4 N2.3 B D G1.2 ins.:

2019* उवाच दीनो राजा च धनंजयमिदं वचः ।

26 b) K2 सत्यं; G3 तत्तत् (for मत्तः). K2 Ñ1 V1 B3 S मम (for ऽनघ). — c) K1 T G °प्रवेशं; K2 अंतः प्र°. — d) Ñ1 D4.5 T G2-4 M (except M3) मम प्रियं. — e) D1.2 तदनुमृश्यामि.

27 c) S °प्रवेशेन. — d) T G °लोपकृत् (G1 °लोपतः).

28 a) V1 महाभाग. — c) V1 न हि धर्मविलोपो°. — d) K Ñ2.3 B1.6 Da1 Dn ते (for मे).

29 Ś1 K1 S अर्जुनः; Ñ1 धनंजय उ°. — a) K3 transp. न and व्याजेन. Ñ3 M6-8 अ- (for न). M8 भजेत् (for चरेत्). — c) T2 G2-4 तस्माद्; M7 स्वाज्याद् (for सत्याद्). V1 G1.2 विचरि°; M6-8 हि चलि°. — After 29, K4 ins.:

2020* क्रियते स्वीकृते राजन्हि चेदात्मना व्रतम् ।
भिद्येत सेतुश्चाधर्मोऽप्ययशः प्राप्नुयां महत् ।;

while T G (except G1) ins.:

2021* आज्ञा तु मम दातव्या भवता कीर्तिवर्धन ।
भवदाज्ञामृते किंचिन्न कार्यमिति निश्चयः ।

30 Ś1 K (except K0) Da2 S om. उवाच. — a) K3 Ñ2 Dn °नुज्ञाय. — b) K0.3.4 Ñ3 B6 Dn1.n2 वनचर्या°. T2 G (except G1) °र्यां दीक्षि°. — c) T G2-6 मासानां; G1 M मासानि (G1 M3.5 °नि ह). — d) Ñ2 Dn °सायानुज°.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0.3.4 Ñ3 B1.6 Da

## २०६

वैशंपायन उवाच ।
तं प्रयान्तं महाबाहुं कौरवाणां यशस्करम् ।
अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः ॥ १
वेदवेदाङ्गविद्वांसस्तथैवाध्यात्मचिन्तकाः ।
चौक्षाश्च भगवद्भक्ताः सूताः पौराणिकाश्च ये ॥ २
कथकाश्चापरे राजञ्श्रमणाश्च वनौकसः ।
दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः ॥३
एतैश्चान्यैश्च बहुभिः सहायैः पाण्डुनन्दनः ।
वृतः श्लक्ष्णकथैः प्रायान्मरुद्भिरिव वासवः ॥ ४
रमणीयानि चित्राणि वनानि च सरांसि च ।
सरितः सागरांश्चैव देशानपि च भारत ॥ ५
पुण्यानि चैव तीर्थानि ददर्श भरतर्षभः ।
स गङ्गाद्वारमासाद्य निवेशमकरोत्प्रभुः ॥ ६
तत्र तस्याद्भुतं कर्म शृणु मे जनमेजय ।
कृतवान्यद्विशुद्धात्मा पाण्डूनां प्रवरो रथी ॥ ७
निविष्टे तत्र कौन्तेये ब्राह्मणेषु च भारत ।
अग्निहोत्राणि विप्रास्ते प्रादुश्चक्रुरनेकशः ॥ ८
तेषु प्रबोध्यमानेषु ज्वलितेषु हुतेषु च ।
कृतपुष्पोपहारेषु तीरान्तरगतेषु च ॥ ९
कृताभिषेकैर्विद्वद्भिर्नियतैः सत्पथि स्थितैः ।
शुशुभेऽतीव तद्राजन्गङ्गाद्वारं महात्मभिः ॥ १०
तथा पर्याकुले तस्मिन्निवेशे पाण्डुनन्दनः ।
अभिषेकाय कौन्तेयो गङ्गामवततार ह ॥ ११
तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान् ।

---

Dn1.n3 D1.2 M5 6 अर्जुन(Dn1.n3 om.)तीर्थयात्रा; B5 D5 अर्जुनवनवास; T1 संभव. — *Adhy. name:* K0.4 अर्जुनप्रयाणं. — *Adhy. no.* (figures, words or both): Dn3 212; D4m 222, D5 163, T1 218, T2 G1.4 173; G2 170, G3 174, G5.6 M 172. — *Śloka no.* Da1 Dn M3 33. — *Aggregate śloka no.:* Dn3 7753.

### 206

1 Ś1 K (except K0) D2 S om. उवाच. — a) K (except K4) D2.4 T2 G3–6 M5 तं प्रयातं; D2 तं च यांतं; M6–8 प्रज्ञावंतं. Ś1 K1 महाभागं.

2 Ñ3 om. 2c–3d. — c) Ś1 दक्षाश्च; Ś1m K2 शुद्धा° (? gloss); K1 देवा°; K3 मोक्षाय; Ñ2 Dn D4.8 भैक्षा°; V1 मौना°; B5 मौला°; D1 शुचयश्च; D2 लोका°; T1 श्रेष्ठा°; T2 G4 मौक्षा°; G1 सर्वे च, G2 क्षौमा°; G5.6 मोक्षा°; Cd Nilp as in text. ❀ Nil.: चौक्षा इत्येव मुख्यः पाठः। ❀ M6–8 योगयुक्ताश्च भगवन्. — d) V1 श्रौता.; M6–8 भक्ताः (for सूता.). Ś1 K0.3.4 Ñ1 D5 °पाठकास्तथा; G3 °णिकोत्तमाः.

3 Ñ3 om 3 (cf. v. l. 2). — a) Ś1 K3 एकका:; G1 धट्टकाः (for कथकाः). Ś1 च परे; K1 च परं. Ś1 K1 जग्मुः (for राजन्). — b) K0 Dn श्रव°; K3 अपराद्य; Ñ1 प्रय°; V1 चार°; D5 श्राव°; M5 6 माह°. — c) B1.3 ये चान्ये. — d) K2.3 B (except B5) D4.8 कथयंति °द्विजोत्तमाः.

4 b) V1 कुरुनंदनः. — c) Ś1 K1 घृतः; T G (except G1) पृथक्. B5 सूक्ष्मकथैः; G1 M शिष्टजनैः.

5 b) Da D1 काननानि सरां°. — c) V1 सागरान्ध्रुंदांश्चैव.

6 a) Ś1 K (except K2) Ñ1.2 V1 Da M6–8 अपि च (for चैव). T2 G2 4 °नि गत्वा पार्थस्तु. — b) K3.4 Ñ3 B Da D1.2 4 कुरुनंदनः (for भरत°). — c) Ñ4 Dn °द्वारमाश्रित्य. — d) M5 निवासम्.

7 a) T1 G1 transp. तत्र and तस्य. B3 तत्र (for तस्य). — b) Ś1 K1 °णुष्व; Ñ2 Dn1.n2 °णु त्वं. — d) Ś1 K (except K3) प्रथमो (for प्रवरो). Ś1 K1 रथः; Ñ2 3 B D हि सः; M5 बली.

8 a) G2 बहुभिः (for कौन्ते°). — c) D1 2 G1 विप्राश्च; D5 °प्रां.

9 a) T G3–4.6 प्रणीय°; G1 प्रज्वाल्य°. — b) Ś1 K1 Ñ1 °लितेषु परेषु च; K2 °तेष्वपरेषु च; Dn2 D1.2 °तेष्वनघेषु च. D5 हुतेषु ज्वलनेषु च. — Ś1 K0 (hapl.) om 9cd. — d) S निरंतर°.

10 ab) M2 transp. विद्वद्भि. and नियतै°. Ś1 K1 Dn2 G1 सत्पथ; Ñ3 सद्वृते; V1 सद्वृतैः; B3 6 Da D1.2 4.8 T2 G3 4 सत्पथे. — c) T2 °भेतितरां राजन्. — d) K4 धृतात्मभिः.

11 b) K0.4 Ñ3 V1 Dn S (except M5) पांडवर्षभ; Ñ1 भरतर्षभः.

उत्तितीर्षुर्जलाद्राजन्नग्निकार्यचिकीर्षया ॥ १२
अपकृष्टो महाबाहुर्नागराजस्य कन्यया ।
अन्तर्जले महाराज उलूप्या कामयानया ॥ १३
ददर्श पाण्डवस्तत्र पावकं सुसमाहितम् ।
कौरव्यस्याथ नागस्य भवने परमार्चिते ॥ १४
तत्राग्निकार्यं कृतवान्कुन्तीपुत्रो धनंजयः ।
अशङ्कमानेन हुतस्तेनातुष्यद्धुताशनः ॥ १५
अग्निकार्यं स कृत्वा तु नागराजसुतां तदा ।
प्रहसन्निव कौन्तेय इदं वचनमब्रवीत् ॥ १६
किमिदं साहसं भीरु कृतवत्यसि भामिनि ।
कश्चायं सुभगो देशः का च त्वं कस्य चात्मजा ॥ १७

उलूप्युवाच ।

ऐरावतकुले जातः कौरव्यो नाम पन्नगः ।
तस्यास्मि दुहिता पार्थ उलूपी नाम पन्नगी ॥ १८
साहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम् ।
दृष्टवत्येव कौन्तेय कन्दर्पेणास्मि मूर्च्छिता ॥ १९
तां मामनङ्गमथितां त्वत्कृते कुरुनन्दन ।
अनन्यां नन्दयस्वाद्य प्रदानेनात्मनो रहः ॥ २०

अर्जुन उवाच ।

ब्रह्मचर्यमिदं भद्रे मम द्वादशवार्षिकम् ।
धर्मराजेन चादिष्टं नाहमस्मि स्वयंवशः ॥ २१
तव चापि प्रियं कर्तुमिच्छामि जलचारिणि ।
अनृतं नोक्तपूर्वं च मया किंचन कर्हिचित् ॥ २२
कथं च नानृतं तत्स्यात्तव चापि प्रियं भवेत् ।
न च पीड्येत मे धर्मस्तथा कुर्यां भुजंगमे ॥ २३

उलूप्युवाच ।

जानाम्यहं पाण्डवेय यथा चरसि मेदिनीम् ।
यथा च ते ब्रह्मचर्यमिदमादिष्टवान्गुरुः ॥ २४ C. 1 7709 B 1 214 24 K 1 234 24

---

13 a) Ñ1 सूपविष्टो, V1 अवकृष्टो — c) K2 D5 S महाबाहुर् — d) K1 Ñ1 3 B3m 3 Da D2 4 काममानया — After 13, D4 ins

2022* गृहीत्वा स्वपितुर्वेश्म नीतोऽयं पाण्डुनन्दन ।

14 b) Ñ2 B Da Dn3 n3 T G (except G1) M6 8 °हित — d) Ś1 K1 हवने, Ñ1 भवन Ñ1 °र्चित

15 d) K1 Da3 D4 अतृप्यद् (for अतुष्यद्)

16 a) T3 G3 4 च (for स), and स (for तु) — c) K2 3 Ñ3 B Da D1 2 4 तेजस्वी; Ñ1 कौरव्य (for कौन्ते°) — d) K2 3 Ñ3 B Da D1 2 4 वाक्यमेतदभाषत (K3 D1. 2 °तदुवाच ह)

17 Before 17, G1 M6 8 ins अर्जुन — b) Ñ V1 B Da Dn1 n3 D1 4 (before corr) भाविनि — c) K3 4 V1 B2 3 Da D1 2 T G (except G1) कस्याय Ko 1 3 Ñ3 3 V1 B1(m as in text) 6 Dn D1 3 4 M सुभगे — d) Ś1 K1 Ñ1 कन्यका, K2 3 Ñ2 3 V1 B1 5 6 Dn1 n2 D2 4 T3 G (except G1) चात्मजा

18 Ś1 K1-3 S om उवाच — c) T G2-4 तस्यापि, G1 तस्यास्मि, G5 6 M8 तस्याह Ś1 Ko 1.4 Ñ1 2 V1 Dn D1. 3 5 राजन्, K2 3 Ñ3 B Da D4 वीर (for पार्थ)

19 a) Da अह, T3 G2 4 सा हि — b) Ś1 Ko 4 V1 °तीर्णां S सरिद्वरां (for समु°) — c) Ś1 कौरव्य (for कौन्ते°) K2 3 Ñ2 3 B (except B6) D दृष्ट्वैव पुरुषव्याघ्र (B5 D1. 2 °घ्र) — d) Ko 4 Ñ1 2 V1 Dn S °णाभिमूर्च्छि°, K2 3 Ñ3 B Da D1 3 5 °णास्मि पीडिता; D4 °णाभिपीडिता

20 a) Ko 3 स, K2 V1 B3m D2 4 5 तन् (for तां) Ś1 Ko 1. 3 4 °मुदितां, K2 Ñ2 3 V1 B1 3 5 D °ग्लपितां, Ñ1 °प्रहितां, B6 °प्रसितां — b) K2 3 B3 5 Da D1. 2 4 पाडु° (for कुरु°) — c) Ś1 K1 अर्जुनानद° — d) Ñ3 आत्मनो नघ K2 प्रमदाना मनोहर

21 Ś1 K1 3 S om उवाच — K4 om 21, G1 om 21a-23b — b) S (except M8, G2 om.) °मासिक — c) K3 N3 V1 B3 5 Da D2 3 4 निर्दिष्ट, N2 M3 5 सदिष्ट, T1 सदिष्टो, T3 G (G1 om ) चादिष्टो

22 G1 om 22 (cf v l 21) — b) Ś1 K1 ब्रह्म° (for जल°) — c) V1 D2 4 तु (for च) Ko 4 Ñ1 D5 G3 अ(Ñ1 ना)नृत चोक्तपूर्वं च — d) Ko D5 किल न (for किंचन) K2 3 Ñ3 B Da D1 2 4 मया जातु वरानने (D4 कथचन), K4 न मया किल कर्हि°

23 G1 om 23ab (cf v l 21) — a) Ś1 N1 3 Dn मे, D2 यत्, G3 5 6 M6-8 च (for तत्) T3 G4 नानृशस (for °त तत्) K1 कथ तच्चानृत न स्यात् (by transp ) — b) S (except G2, G1 om ) चैव (for चापि) — c) G3 शीर्ये°, G5 6 सिद्ध्ये° (for पीड्ये°) Ś1 न पीड्येत च मे धर्म ; V1 न च मे विद्यतेधर्म — d) K2 Ñ3 V1 B (except B1) D (except Dn) M3 कुरु (for कुर्यां)

24 Ś1 K1 S om उवाच — a) K1 °ह तु कौंतेय

परस्परं वर्तमानान्द्रुपदस्यात्मजां प्रति ।
यो नोऽनुप्रविशेन्मोहात्स नो द्वादशवार्षिकम् ।
वने चरेद्ब्रह्मचर्यमिति वः समयः कृतः ॥ २५
तदिदं द्रौपदीहेतोरन्योन्यस्य प्रवासनम् ।
कृतं वस्तत्र धर्मार्थमत्र धर्मो न दुष्यति ॥ २६
परित्राणं च कर्तव्यमार्तानां पृथुलोचन ।
कृत्वा मम परित्राणं तव धर्मो न लुप्यते ॥ २७
यदि वाप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः ।
स च ते धर्म एव स्याद्दत्त्वा प्राणान्ममार्जुन ॥ २८
भक्तां भजस्व मां पार्थ सतामेतन्मतं प्रभो ।
न करिष्यसि चेदेवं मृतां मामुपधारय ॥ २९
प्राणदानान्महाबाहो चर धर्ममनुत्तमम् ।
शरणं च प्रपन्नास्मि त्वामद्य पुरुषोत्तम ॥ ३०
दीनाननाथान्कौन्तेय परिरक्षसि नित्यशः ।
साहं शरणमभ्येमि रोरवीमि च दुःखिता ॥ ३१
याचे त्वामभिकामाहं तस्मात्कुरु मम प्रियम् ।
स त्वमात्मप्रदानेन सकामां कर्तुमर्हसि ॥ ३२

वैशंपायन उवाच ।

एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया ।
कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ॥ ३३
स नागभवने रात्रिं तामुषित्वा प्रतापवान् ।
उदितेऽभ्युत्थितः सूर्ये कौरव्यस्य निवेशनात् ॥ ३४

इति श्रीमहाभारते आदिपर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

---

— c) T2 G3-5 तथा. S हि (for च). — G6 (hapl.) om. 24d-25a. — d) Ś1 आचष्टवान्. T G3-5 प्रभुः (for गुरुः).

25 G6 om. 25abcde (cf. v. l. 24). — a) K1 G1 वर्तमानं; K2.4 Ñ1 V1 D1 T G3-5 °माना; M5.6.7 °मानां. Ñ1 अन्योन्यं वर्तमानानां. — b) T2 G3-5 सुतां (for आत्मजां). — c) N3 अत्र (for नो). Dn D1.3.4 अत्र (for ऽनु). — d) K0.3.4 N2.3 B6 Dn D5 M8 वै (for नो). S (G6 om.) °मासिकं.

26 After 26ab, K4 ins.:

2023* नारदस्याज्ञया तत्र कृतं धर्मंरिरंसया ।
एकः संवत्सरः पूर्णः पञ्चधा शकलीकृतः ।
द्रौपद्यामेव कौन्तेय नारदस्याभ्यनुज्ञया ।

— c) N3.4 Dn D4.5 S कृतवान्; V1 D3 कृतं च. — d) Ś1 तत्र; K1 न च; K3 इति; Ñ1 नात्र; G3 अयं (for अत्र). Ś1 दुष्यते; D5 S लुप्यते (cf. 27d). — After 26, T1 G (except G1) ins.:

2024* त्वया कामप्रचाराय प्रेषितं न हि यन्मनः ।
तस्मात्तव प्रत्यवायो युज्यते न हि कुत्रचित् ।

27 K3 (? hapl.) om. 27. — d) D3 दुष्यति (for लुप्यते); cf. 26d.

28 a) Ś1 यद्यप्यत्र च. K (except K3) N1.3 V1 D3 वाप्यत्र; T2 G3-5 वाप्यथ; G1.2 M8 वाप्यस्य. — c) T1 G (except G1) M8 तु (for च). — d) K1 transp. दत्त्वा and प्राणान्.

29 a) K3 Ñ2.3 B D (except D3) च भज (for भजस्व). — b) Ñ1 V1 मतं (for मतं). — c) T2 G3-5 अद्य (for मां). K1.3 Ñ1 V1 B3 T1 G1 अवश्यं°.

30 a) Ñ1 प्रमदानां (for प्राणदानान्). — b) M8 कुरु (for चर). M6.8 अनुमतं; M7 असांमतं.

31 a) K0 दीनामनाथां; T1 °नार्तांश्च; T2 G3-5 °नाथा हि; G1 °नंधांश्च; G5.6 M °नाथांश्च. — b) T2 G3-5 परिरक्ष्या हि. — c) Ñ1 °भ्येत्य; T1 °भ्येति. — d) K0.2.4 तु; T1 अति- (for च).

32 a) K4 त्वां चातिका°; Ñ2.3 B D (except D3) G6 त्वां चाभि°. — b) Ñ1 D1.3 तत्कुरुष्व. T2 G3-5 transp. कुरु and मम. — d) M8 प्रसादं (for सकामां).

33 Ś1 K (except K0) S om. उवाच. — a) G3.4 (before corr.) °वांस्तथा किरीटी स (hypermetric).

34 b) T2 G3-5 उषित्वा च प्रता°. — After 34ab, D4 (marg. sec. m.) S ins.:

2025* पुत्रमुत्पादयामास तस्यां स सुमनोहरम् ।
इरावन्तं महाभागं महाबलपराक्रमम् ॥

while D5 ins.:

2026* प्रभातेऽभ्युषितोलूप्या भाषितः स्वं निवेशनम् ।

— c) V1 उत्थितोऽभ्युदिते सूर्ये; S विमलेऽभ्युदिते सू°. — After 34, K (except K1) ins.:

2027* आजगामार्जुनो धीमान्गङ्गाद्वाराश्रमं प्रति ॥

while S ins.:

2028* निश्चक्राम तदा पार्थः स्वमेव भवनं शुभम् ।
[ M °र्थः शुभं भवनमुत्तमम्. ]

K4 (om. line 4) ins. after 2027*: Ñ2.3 Dn D1.4

## २०७

वैशंपायन उवाच ।

कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यः स भारत ।
प्रययौ हिमवत्पार्श्वं ततो वज्रधरात्मजः ॥ १
अगस्त्यवटमासाद्य वसिष्ठस्य च पर्वतम् ।
भृगुतुङ्गे च कौन्तेयः कृतवाञ्शौचमात्मनः ॥ २
प्रददौ गोसहस्राणि तीर्थेष्वायतनेषु च ।
निवेशांश्च द्विजातिभ्यः सोऽददत्कुरुसत्तमः ॥ ३
हिरण्यबिन्दोस्तीर्थे च स्नात्वा पुरुषसत्तमः ।
दृष्टवान्पर्वतश्रेष्ठं पुण्यान्यायतनानि च ॥ ४
अवतीर्य नरश्रेष्ठो ब्राह्मणैः सह भारत ।
प्राचीं दिशमभिप्रेप्सुर्जगाम भरतर्षभः ॥ ५
आनुपूर्व्येण तीर्थानि दृष्टवान्कुरुसत्तमः ।
नदीं चोत्पलिनीं रम्यामरण्यं नैमिषं प्रति ॥ ६
नन्दामपरनन्दां च कौशिकीं च यशस्विनीम् ।
महानदीं गयां चैव गङ्गामपि च भारत ॥ ७
एवं सर्वाणि तीर्थानि पश्यमानस्तथाश्रमान् ।
आत्मनः पावनं कुर्वन्ब्राह्मणेभ्यो ददौ वसु ॥ ८
अङ्गवङ्गकलिङ्गेषु यानि पुण्यानि कानिचित् । C. 1. 7820 B. 1. 215. 9 K. 1. 235. 8

---

after 34:

2029* आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह ।
परित्यज्य गता साध्वी उलूपी निजमन्दिरम् ।
दत्त्वा वरमजेयत्वं जले सर्वत्र भारत ।
साध्या जलचराः सर्वे भविष्यन्ति न संशयः ।

Colophon om. in Dn1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ2 B D (Dn1 om.) M2.3 अर्जुन(Ś1 om.)तीर्थयात्रा (B5 °वनवास): T1 संभव. — *Adhy. name:* Ko.3.4 उलूपीसमागमः; D5 उलूप्यागमनं. — *Adhy. no.* (figures, words or both): Dn2 213; D4m 223; D6 164; T1 219; T2 G1.4 174; G2 171; G3 175; G5.6 M 173. — *S'loka no.:* Dn M2 35. — *Aggregate s'loka no.*, Dn2 7789.

### 207

1 Ś1 K (except Ko) D2 S om. उवाच. — a) K2.3 Ñ2 B (except B6) D (except D1) च (for तु). M5 ततः (for तु तत्). — b) Ś1 Ko.4 Ñ1 D5 पार्थिवः; K1 पांडवः (for भारत). — c) K1 D5 T G (except G1) °त्पार्श्वे.

2 a) T1 G1.5.6 °वन°; T2 G2-4 °पाद°; M1 °पद°. — b) Some MSS. वशिष्ठस्य; T G5-6 M (except M5) गविष्ठस्य. G2 प्रविष्टं चापि पर्व°. — c) T1 भृगुनंदे; T2 G2-6 °तीर्थे; G2 °कुंदे; M °तुंदे. B6 -तु; T1 G1.5.6 M तु (for च). Ñ1 S (except G2) कौरव्यः. — d) Ś1 K2 °चमादितः.

3 b) K2.3 Ñ B D (except D5) सुबहूनि च भारत; V1 यज्ञार्थं दक्षिणामिह; S यज्ञमुद्दिश्य दक्षिणाः (G3 M6.6-8 °णां). — Ñ2 om. 3c-5b. — d) Ś1 Ko.1.4 D5 प्रददौ; D2 S (except G2.5) सोददात्. A few MSS. कुरुसत्तम; V1 कुरुनंदनः. K3 संदिदेश कुरूत्तमः.

4 Ñ2 om. 4 (cf. v. l. 3); G1 (hapl.) om. 4a-6b; K1 M6 (hapl.) om. 4ab. M6-8 read 4a-6b after 1. 208. 11 — a) Ko.4 D5 M6-8 °स्तीर्थेषु; Ñ1 °बिंदुतीर्थे च; T G (G1 om.) M2 °स्तीर्थानि. — b) Ś1 Ko.4 D5 भरतसत्तमः. — c) K2 Ñ1.2 B D पांडव(D5 भरत)श्रेष्ठः; S (G1 om.) पर्वतश्रेष्ठान्.

5 G1 om. 5 (cf. v. l. 4); N2 om. 5ab (cf. v. l. 3). For M6-8 cf. v. l. 4. — a) D2 कुरुश्रेष्ठो. — b) Ś1 Ko.1.4 V1 पार्थिवः (for भारत). — d) G5 पुरुषर्षभः. Some MSS. °र्षभ.

6 G1 om. 6ab (cf. v. l. 4). For M6-8 cf. v. l. 4. — a) A few MSS. °पूर्वेण. — b) A few MSS. °सत्तम. — c) B6 दिव्यां (for रम्यां). — d) S नैमिशं.

7 Ś1 K1.4 om. 7. — a) Ko.2 नंदां चापरनंदां; K2 Ñ1 D1 नंदां परमनंदां; D5 G2 नंदां च परनंदां.

8 a) K1 Ñ2 Dn D2.4 transp. सर्वा° and तीर्था°. — b) Ś1 Ko.1.4 प्रपश्यन्सरितस्तथा. — c) Ś1 K2 प्रवणान्; Ñ1 श्रावनं. D1.2 भक्षन् (for कुर्वन्). — d) S धनं ददौ (G1 ददौ धनं). Ñ2 B3m D (except D1.2.3) च गाः (for वसु).

जगाम तानि सर्वाणि तीर्थान्यायतनानि च ।
दृष्ट्वा च विधिवत्तानि धनं चापि ददौ ततः ॥ ९
कलिङ्गराष्ट्रद्वारेषु ब्राह्मणाः पाण्डवानुगाः ।
अभ्यनुज्ञाय कौन्तेयमुपावर्तन्त भारत ॥ १०
स तु तैरभ्यनुज्ञातः कुन्तीपुत्रो धनंजयः ।
सहायैरल्पकैः शूरः प्रययौ येन सागरम् ॥ ११
स कलिङ्गानतिक्रम्य देशानायतनानि च ।
धर्म्याणि रमणीयानि प्रेक्षमाणो ययौ प्रभुः ॥ १२
महेन्द्रपर्वतं दृष्ट्वा तापसैरुपशोभितम् ।
समुद्रतीरेण शनैर्मणलूरं जगाम ह ॥ १३

तत्र सर्वाणि तीर्थानि पुण्यान्यायतनानि च ।
अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम् ।
मणलूरेश्वरं राजन्धर्मज्ञं चित्रवाहनम् ॥ १४
तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना ।
तां ददर्श पुरे तस्मिन्विचरन्तीं यदृच्छया ॥ १५
दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीम् ।
अभिगम्य च राजानं ज्ञापयत्स्वं प्रयोजनम् ।
तमुवाचाथ राजा स सान्त्वपूर्वमिदं वचः ॥ १६
राजा प्रभंकरो नाम कुले *अस्मिन्बभूव ह ।
अपुत्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् ॥ १७

---

9 b) K3 Ñ3 B D (except D5) S (except M3) तीर्था° (for पुण्या°). — G3 om. 9c–10b. — c) Ñ1 पुण्यानि (for सर्वाणि). — d) K2 Ñ3 B3 Da1 Dn1 D1.3 T2 G2.4 पुण्या° (for तीर्थां°). — f) Ś1 K0.3.4 Ñ1 D5 transp. धनं and ददौ. S (G3 om.) पुनः (for ततः).

10 G3 om. 10ab (cf. v. l. 9). — a) Ś1 K0.1 D5 कलिंगद्वारराष्ट्रेषु; K3 Ñ1 V1 B1.3 Da2 D1.2 T1 G1.5 M (except M3) °द्वारे तु; T2 G2.4 °द्वारेण. — c) K3 T1 G1.5 M3.5 °नुज्ञाप्य.

11 c) K1 Ñ3 B1.3 वीरः; G1–4 शूरैः. — d) Ñ3 B D (except D5) यत्र (for येन). Ś1 N (except K) M3 सागरः.

12 b) Ñ1 D5 तीर्थान्यायत°. — c) Ñ3 B6 Dn D5 हर्म्याणि; B1.3 Da D1.2 T G (except G1) वनानि. — d) Some MSS. प्रेक्ष्य°. — After 12, D4 (marg. sec. m.) S ins.:

2030* शूर्पाकारमथासुत्य सागरानूपमाश्रितः ।
[ M4.5 °कारमतिक्रम्य. G1 °सागतः. ]

13 a) K0.1.3 B1.3 Da1 Dn2 D1 महेंद्रं; K4 माहेंद्र°. — After 13ab, D4 (marg. sec. m.) S ins.:

2031* गोदावर्यां ततः स्नात्वा सामतीत्य महाबलः ।
कावेरीं तां समासाद्य संगमे सागरस्य ह ।
स्नात्वा संपूज्य देवांश्च पितृंश्च ऋषिभिः सह ।
[ (L. 2-3) D4 T G1–6 अथासाद्य (for समा°) and मुनिभिः (for ऋषि°). ]
— d) N मणिपूरं.

14 a) Ś1 K1 transp. सर्वा° and तीर्था°. — After 14ab, T2 G (except G1) ins.:

2032* अथ चयोदशे मासे मणलूरेश्वरं प्रभुम् ।
— c) N मणिपूरे°. — After 14, D4 (marg. sec. m.) T G (except G1) ins.:

2033* सर्वशास्त्रेषु नेतारं सर्वास्त्रज्ञमकल्मषम् ।
धर्मे सत्ये दमे शौचे शौर्ये चैव विशेषतः ।
द्विजराजऋषीणां च धार्मिकाणां महीतले ।
कीर्तने चोपमाभूतं क्षत्रधर्मविदुत्तमम् ।

D4 (marg. sec. m.) cont.: K (except K1) D5 ins after 14:

2034* स च तं प्रतिजग्राह विधिपूर्वेण पाण्डवम् ।

15 b) K3 चारुहासिनी. — K3 om. 15c–16b.

16 K3 om. 16ab (cf. v. l. 15). — a) S एव (for च). Ś1 तं °रोहा. — b) Ś1 K1 चैव भामिनीं; D5 चारुहासिनीं. — c) B6m D5 तस्याः स्वपितरं ज्ञात्वा; D1 तस्याः पितरं गत्वाथ; T2 G3–4 °म्य महात्मानं; M4 °म्य महाराज. — d) Ś1 K Ñ1 D5 आचख्यौ (K4 कथयित्); Ñ2 Dn D4 अवदत्; Ñ3 संजल्पत्; B अजल्पत्; B6m D5 D1.3 °म्यज्ञपत्. — After 16cd, Ñ3 Dn D1.3.4 ins.:

2035* देहि मे स्वविधमां राजन्क्षत्रियाय महात्मने ।
तच्छ्रुत्वा त्वब्रवीद्राजा कस्य पुत्रोऽसि नाम किम् ।
उवाच तं पाण्डवोऽहं कुन्तीपुत्रो धनंजयः ।
[ (L. 1) Dn2 D1.3 स्वसुतां (for स्वविमां). ]
— Ś1 K1 om. 16ef. — e) D5 °वाच तथा रा°; G3 °च महाराजा. — f) V1 सान्त्वपूर्वम्.

17 Before 17, S ins. चित्रवाहनः. — a) K (except K1) Ñ2 Dn D4 M5 प्रभंजनो; Ñ3 D5 T G M6–8 प्रभंकरो. — b) Ś1 कुलेऽस्मिन्; K0.2.4 Ñ2 °ऽहे ह्यस्मिन्; K1 M7 °ऽहे ह्यस्मिन्; K3 Ñ1.3 V1 B D T G M6–8 °ऽस्मिन्नं. (all avoiding the hiatus in different ways) — c) Ś1 K (except K3) Ñ1 D5 सपुत्रः. — d) Ś1 K तपोऽत्युग्रं (K3 सुदुष्करं); Ñ1 D5 तदात्युग्रं; T1 पुरोत्तमं; T2 G3–6 M6.8

उग्रेण तपसा तेन प्रणिपातेन शंकरः ।
ईश्वरस्तोषितस्तेन महादेव उमापतिः ॥ १८

स तस्मै भगवान्प्रादादेकैकं प्रसवं कुले ।
एकैकः प्रसवस्तस्माद्भवत्यस्मिन्कुले सदा ॥ १९

तेषां कुमाराः सर्वेषां पूर्वेषां मम जज्ञिरे ।
कन्या तु मम जातेयं कुलस्योत्पादनी ध्रुवम् ॥ २०

पुत्रो ममेयमिति मे भावना पुरुषोत्तम ।
पुत्रिका हेतुविधिना संज्ञिता भरतर्षभ ॥ २१

एतच्छुल्कं भवत्वस्याः कुलकृज्जायतामिह ।
एतेन समयेनेमां प्रतिगृह्णीष्व पाण्डव ॥ २२

स तथेति प्रतिज्ञाय कन्यां तां प्रतिगृह्य च ।
उवास नगरे तस्मिन्कौन्तेयस्त्रिहिमाः समाः ॥ २३ C. 1. 7837 B. 1. 215. K. 1. 235.

इति श्रीमहाभारते आदिपर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

---

सोत्तमं; G1.5 स चोत्तम; G6 च चोत्तमं (sic).

18 a) Ś1 Ko 3 4 D5 M3.5 चैव (for तेन). — b) K2.3 Ñ2.3 V1 B D देवदेवः पिनाकधृक् (Ñ2 V1 Dn1 n2 °धृत्); Ñ1 तापितोभून्महेश्वरः; S प्रणिपत्य प्रणम्य (M3 प्रसाद्य) च. — Ñ1 om. 18cd. — c) K2.3 Ñ2 3 V1 B D (except D5) पार्थ; S तात (for तेन). — d) Ñ2 B Dn D1.5 देवदेव.

19 a) Ñ3 स च तस्मै वरं प्रादात्. — b) Ko.3 4 Ñ1 एकं हि; V1 एकं वै (for एकैकं). S एकप्रसवजं कुलं. — c) M6-8 एकतः. M6 8 प्रसवात्. Ñ1 ह्यस्माद्. — d) V1 भविष्यति (for भवत्यस्मिन्). Ñ1 ततः; G2 M6-8 तदा.

20 ab) T G transp. सर्वे° and पूर्वे°. Ś1 K1 समः; T1 इह; G1 अभि- (for मम). — c) K4 T2 G2-5 च (for तु). G1 transp. तु and मम. K2.3 Ñ2.3 B D (except D1.2 5) एका (K3 एषा) तु (N2 Dn च) मम कन्येयं. — d) Ś1 °स्योत्सादनी; K1 °स्योत्सादि°; V1 T G1.4 M3.5.7 °त्पादिनी. K2.3 Ñ3 B D (except D1.2.5) भृशं.

21 a) Ñ B D अयं (for इयं). — b) K2.3 Ñ2.3 V1 B (B1m as in text) D (except D5) पुरुषर्षभ (cf. 21d) — After 21ab, Ñ1 D5 ins. 2036*. — c) Ś1 K1 पुत्र° (for हेतु°). — d) V1 संस्कृता; T G2-4 °मिता; G5.6 °मता. Ś1 K2.4 N1 M पुरुषर्षभ. N (except Ś1 K1) ins. after 21 (Ñ1 D5, after 21ab):

2036* तस्मादेकः सुतो योऽस्यां जायते भारत त्वया ।

22 a) Ś1 K1 भवत्यस्याः; T G3-6 °त्वस्यां; M6-8 भवेत्तस्याः. — b) Ś1 transp. कुलकृत् and जायतां. K2 भृगं; K4 D1 S इति (for इह). — G1 om. 22c-23d. — d) S (G1 om.) भारत (for पाण्डव).

23 G1 om. 23 (cf. v. l. 22). — Before 23, G3 ins. वैशं°. — b) Ś1 Ko.1.4 Ñ1 transp. कन्यां and तां. K3 कन्यां तु परिगृ°; T2 G3-6 स तां कन्यां प्रगृ°. — After 23ab, S (except G1) ins.:

2037* मासे त्रयोदशे पार्थः कृत्वा वैवाहिकीं क्रियाम् ।

— c) G2 शयने (for नगरे). — d) K1 त्रिचतुः- (for त्रिहिमाः). K3 Ñ2.3 V1 B (B1m as in text) Dn D1.2.4 तिस्रः कुंतीसुतः समाः (Nilp हिमाः); Ñ1 कौंतेयश्च समात्रयं; S (G1 om.) मासांस्त्रीन्स तया सह. Cd cites त्रिहिमाः समाः (as in text). — After 23, Ñ2 Dn D1.2.4 ins.:

2038* तस्यां सुते समुत्पन्ने परिष्वज्य वराङ्गनाम् ।
आमन्त्र्य नृपतिं तं तु जगाम परिवर्तितुम् ।

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B D3 Dn1.n3 D1.2.4.5 M3.5 अर्जुन(D5 om.)तीर्थयात्रा (B5 °वनवास); T1 संभव. — *Adhy. name.* Ś1 Ko 1 2.4 D5 चित्रांगदालंभः (K4 °लाभः; D3 अर्जुनस्य चित्रांगदालाभः). — *Adhy no.* (figures, words or both): Dn3 214; D4m 224; D5 165, T1 220, T2 G1 4 175; G2 172; G3 176; G5.6 M 174. — *S'loka no.* Dn 27; M3 26. — *Aggregate s'loka no.:* Dn3 7816.

## 208

1 Ś1 K (except Ko) D2 S om. उवाच. — a) Ko D3 Dn3 समुद्र-. — b) D1 पुरुषर्षभ; some MSS. °र्षभ. — c) K3 B1 D2 D1 2 T2 G3.4 स (for सु). — d) T G (except G1) रहितानि (for शोभि°). — After 1, M6-8 read 1 207. 4c-6b!

2 G1 (hapl.) om. 2. — a) T2 G4 वर्जयस्त्रिव. Ś1 K1 D1 G2.3 च; Ñ1 हि (for स). — b) Ñ2 B1 Dn D2.4 transp. पञ्च and तत्र. Ś1 K1 यत्र (for तत्र). K3 D5 सु, Ñ2 B1 Dn D2.4 स; T2 G2-4 च (for तु). — c) Ś1 Ko.1 हि; V1 च (for तु). Ñ2 संकीर्णानि च; B3 D5 आकीर्णानि तु; B3 D (except D5) M3 अवकीर्णानि; T2

## २०८

वैशंपायन उवाच ।

ततः समुद्रे तीर्थानि दक्षिणे भरतर्षभः ।
अभ्यगच्छत्सुपुण्यानि शोभितानि तपस्विभिः ॥ १
वर्जयन्ति स्म तीर्थानि पञ्च तत्र तु तापसाः ।
आचीर्णानि तु यान्यासन्पुरस्तात्तु तपस्विभिः ॥ २
अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम् ।
कारंधमं प्रसन्नं च हयमेधफलं च यत् ।
भारद्वाजस्य तीर्थं च पापप्रशमनं महत् ॥ ३
विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः ।
दृष्ट्वा च वर्ज्यमानानि मुनिभिर्धर्मबुद्धिभिः ॥ ४
तपस्विनस्ततोऽपृच्छत्प्राञ्जलिः कुरुनन्दनः ।
तीर्थानीमानि वर्ज्यन्ते किमर्थं ब्रह्मवादिभिः ॥ ५

तापसा ऊचुः ।

ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान् ।
*अत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन* ॥ ६

वैशंपायन उवाच ।

तेषां श्रुत्वा महाबाहुर्वार्यमाणस्तपोधनैः ।
जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः ॥ ७
ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् ।
विगाह्य तरसा शूरः स्नानं चक्रे परंतपः ॥ ८
अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान् ।
निजग्राह जले ग्राहः कुन्तीपुत्रं धनंजयम् ॥ ९
स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम् ।
उदतिष्ठन्महाबाहुर्बलेन बलिनां वरः ॥ १०
उत्कृष्ट एव तु ग्राहः सोऽर्जुनेन यशस्विना ।
बभूव नारी कल्याणी सर्वाभरणभूषिता ।
दीप्यमाना श्रिया राजन्दिव्यरूपा मनोरमा ॥ ११
तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्रो धनंजयः ।

---

G2-4 M5.7.8 अवतीर्णानि. Ko.4 तान्यासन्; K2 तानि स्युः; M6-8 यत्रासन्.

3 a) Ś1 K1 कारंधमप्र°; Ko.2 करंधमप्र°; Ñ1 कर्वधंसंप्र°; D1 करं°; D2 G2 करंधमंप्र°; T1 कारंकमं प्र°; T2 G3-5 करंधर्मेप्लवं चैव; M5 °समं प्र°; M8 °धर्मं प्र°. — d) D5 °मेधपरं. Ñ2 B1 Dn1.n2 D1.5 तत् (for यत्). T1 °मेधं च पंचमं; T2 G1.2.4 °मेधं च यत्फलं. — e) K1.2 T G2-4 भरद्वा°. Ko D4 यत्; K2 Ñ2.3 V1 B (except B6) Dn D2.3.4 तु (for च). M6 °स्य तीर्थानि. — f) K4 परं (for महत्). T1 पापोपशमनं महत्; M8 पापप्रशमनानि च. — After 3, N ins.:

2039* एतानि पञ्च तीर्थानि ददर्श कुरुसत्तमः ।
[ K1.2 V1 B4 कुरुनंदनः. ]

4 K2 om. 4c-5b. — a) Ñ1 °तान्यभिष्ठ°. — b) M5 भारत (for पाण्डवः). — c) D5 तानि वर्ज्यानि; G6 वर्जनीयानि. — d) Ñ1 प्राणिभिर्. Ś1 धर्मवादिभिः; D1.2 तत्त्वदर्शिभिः; T2 G4 °दर्शिभिः; M5 °चारिभिः. G2 मुनिधर्मार्थंबु°.

5 Ś1 (hapl.) om. 5; K3 Ñ3 om. 5ab (cf. v. l. 4). — a) Ñ3 B4.6 Dn D1.2 कुरुसत्तमः. — c) S एतानि. — d) K1 धर्मवादि°; Ñ1 धर्मचारि°; V1 B2 ब्रह्मचारि°; T G1 ब्राह्मणादि°.

6 Ś1 K1 S om. ऊचुः. — b) T1 इह (for च). T G3-4 भक्षयंति (for हरंति च). — K2 (hapl.) om. 6c-7b. — c) N1.2 B1 Dn D3.4 M5 ततः (for अतः). D1 एवाभिवर्ज्यंते. — d) K1 D5 T G1-4 M5.6 कुरुसत्तम.

7 K3 om. 7ab (cf. v. l. 6). — Ś1 K1.3.4 S om. उवाच. — a) Ñ1 °त्वा वचः पार्थो. S श्रुत्वा तु वचनं तेषां — b) K1 (before corr.) तपोधनात्; M6-8 तपस्विभिः — d) K1 V1 °ष्टुं भरतस°; K3 दृष्टानि कुरुस°.

8 a) K1 द्रौपदं (for सौभद्रं). — b) K2.3 Ñ1.2 V1 B D (except D5) T G (except G1) सह° (for तं°). Ko.4 Ñ1 B1 D1.2.3 वीरः.

9 b) Ko D4 स्थितमंतर्जले महान्. — c) K3 Ñ V1 B D जग्राह चरणे ग्राहः. — d) S शापमोक्षाय भारत.

10 b) V1 जलेचरं; M6-8 जलेशयं. — c) M5 महात्म (for महाबाहुर्).

11 a) Ś1 K1 V1 T2 G2-4 उत्तरद; K4 आहृत; Ñ1 उत्क्षिप्त; Cd as in text. K2.3 Ñ2.3 V1 B Da Dn D1.2 transp. तु and ग्राहः. T2 G3.4 तद् (for तु). Ś1 स

तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ॥ १२
का वै त्वमसि कल्याणि कुतो वासि जलेचरी ।
किमर्थं च महत्पापमिदं कृतवती पुरा ॥ १३
नार्युवाच ।
अप्सरासि महाबाहो देवारण्यविचारिणी ।
इष्टा धनपतेर्नित्यं वर्गा नाम महाबल ॥ १४
मम सख्यश्चतस्रोऽन्याः सर्वाः कामगमाः शुभाः ।
ताभिः सार्धं प्रयातास्मि लोकपालनिवेशनम् ॥ १५
ततः पश्यामहे सर्वा ब्राह्मणं संशितव्रतम् ।
रूपवन्तमधीयानमेकमेकान्तचारिणम् ॥ १६
तस्य वै तपसा राजंस्तद्वनं तेजसावृतम् ।
आदित्य इव तं देशं कृत्स्नं स व्यवभासयत् ॥ १७
तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतदर्शनम् ।
अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया ॥ १८
अहं च सौरभेयी च समीची बुद्बुदा लता ।
यौगपद्येन तं विप्रमभ्यगच्छाम भारत ॥ १९
गायन्त्यो वै हसन्त्यश्च लोभयन्त्यश्च तं द्विजम् ।
स च नास्मासु कृतवान्मनो वीर कथंचन ।
नाकम्पत महातेजाः स्थितस्तपसि निर्मले ॥ २०
सोऽशपत्कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ ।
ग्राहभूता जले यूयं चरिष्यध्वं शतं समाः ॥ २१ C. 1. 7860 B. 1. 216. K. 1. 230.

इति श्रीमहाभारते आदिपर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

---

ग्राहो; K1 D2 T1 जग्राह (for तु ग्राहः). — b) Ś1 हि (for सः). Ko Ñ1 T G2-6 M1 तपस्विना; D5 G1 M3 तर°. — f) G1 M5 मनोहरा.

12 a) Ko.4 S °द्भुततमं; D5 °द्भुतमिदं.

13 Before 13, S (except G1 M3.5) ins. अर्जुनः. — b) G1 M3.5 चापि. K3 B (except B1) D (except Da1 D5) G3.6 M3.5 °चरि. Ś1 Ko.1.3.4 Ñ1.3 V1 कुतो वा जलचारिणी. — c) G5.6 त्वं (for च). — d) Ś1 K1 Ñ1 ह्यसि (for पुरा).

14 Ko.4 D5 स्त्री उ°; N2 Dn D1.4 वर्गोवाच; T G M3.5 स्त्री; M6-8 अप्सरा (for नार्युवाच). *N. B.* In this instance neither Ś1 or K1 om. उवाच; both read the ref. exactly as in text! — a) K2 हि (for ऽस्मि). Ś1 Ko.1.4 Ñ1 D5 °रा ह्यस्मि कौंतेय. — b) Ś1 Ko.1.3.4 Ñ1 V1 D5 °निवासिनी; Ñ2.3 B3.6 Da Dn D1.2.4 M °विहारिणी; T2 G4 इष्टारण्य°. — c) K2 Ñ3 अहं; B5 कांता (for इष्टा). — d) Ś1 K1 वर्षा; Ko.2-4 V1 वर्चा; Ñ1 वृंदा; B1 चर्दा; D2 T2 G M3.5 वंदा; T2 नंदा; M6-8 विंदा.

15 a) Ś1 K1 °श्च तथान्याः; G1 °श्चतुर्थान्याः. — c) Ś1 समं (for सार्धं). — d) Ś1 Ko.1.4 D5 देवराजनिवेशनं (Ko °शनात्); K2.3 °निवेशनात्.

16 a) Ś1 तथा; K1 तत्र. T1 पश्याम वै सार्धं. — b) MSS. (as usual) शंसित°, संश्रित°, शंशित°; cf. v. l. 1. 1. 2 etc. — c) Ñ3 V1 B1.3.6 m Da D1.2.5 तपस्विनं. Da D1.2 रूपवंतं.

17 a) K3 Ñ3 B1 Dn S एष (for वै). Ś1 K1.2 तेजसा; K4 तरसा. Ś1 Ko.3.4 Ñ1 D1.2.5 वीर; K1 नित्यं (for राजन्). — c) T1 °रूपस् (for इव). — d) K1 समगभा°; K3 विभोच्य भा°; Ñ1 एवावभा°; Ñ2.3 Dn D4 सर्वं व्यकाशयत्; B1.3 स हि व्यभा°; B4 D1.2 स व्यत्यकाशयत्; B6 Da एव व्यकाश°; D5 सो व्यवभा°; T G अभ्यवभासयन् (G1 तद्व्यवभासयन्); M5 तद्व्यवभा°; M6-8 °यन्.

18 b) Ko Ñ2.3 B D (except D1.2.5) °चाद्भुतमुत्तमं. — c) K3 D5 G5.6 °र्णोस्मि.

19 b) Ś1 Ko.3.4 सामेची; K1 सामैची; K2 सध्यायी; N3 सौश्रेया; D2 शमीची. K3 D5 S (except G1) °बुद्बुसा. — c) K2 transp. तं and विप्रं. — d) Ś1 K1 अभ्याग°; T2 G3-4 अभिग°.

20 a) K2 च; N2 B5 D अथ; B1.3.5 वि- (for वै). Ś1 Ko.1 Ñ1 गायंत्यो ललमानाश्च; K4 °त्यो नृत्यमानाश्च. Cd cites ललमानाः. — b) Ś1 लोभमानाश्च; Ñ2 Dn लोभयित्वा च; B5.6 लोभयंतश्च; T1 क्षोभयंत्यश्च. T2 G नृत्यंतश्च (T2 G5.6 °तो वै) वरांगनाः (G1 विशेषतः). — After 20ab, T G ins.:

2040* प्रेक्षणानि च कुर्वन्त्यो विवृतं कारयन्ति च ।
अनिच्छन्त्य इवाङ्गानि हासभावविलासितैः ।
बाहूरुमूलदन्तानां दर्शनं वै वराङ्गनाः ।
कुर्वन्त्यो लोभयन्त्यश्च तं द्विजं परितः स्थिताः ।

[ (L. 1) G3 प्रेक्षमाणानि कु°. T1 विकारान्कारयाम च. — (L. 2) T1 आविशन्निर्; G1 आनमंतीर्; G5.6 °च्छंतीर्. — (L. 4) T2 G4 पुरतः; G3 परतः. G5.6 श्रिताः. ] — c) K4 वै (for च). Ñ1 मासा°. — d) Ś1 K1 वीरः;

## २०९

वर्गोवाच ।
तता वयं प्रव्यथिताः सर्वा भरतसत्तम ।
आयाम शरणं विप्रं तं तपोधनमच्युतम् ॥ १
रूपेण वयसा चैव कन्दर्पेण च दर्पिताः ।
अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज ॥ २
एष एव वधोऽस्माकं सुपर्याप्तस्तपोधन ।
यद्वयं संशितात्मानं प्रलोब्धुं त्वामिहागताः ॥ ३
अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्मचिन्तकाः ।
तस्माद्धर्मेण धर्मज्ञ नास्मान्हिंसितुमर्हसि ॥ ४
सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते ।
सत्यो भवतु कल्याण एष वादो मनीषिणाम् ॥ ५
शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम् ।
शरणं त्वां प्रपन्नाः स्म तस्मात्त्वं क्षन्तुमर्हसि ॥ ६

वैशंपायन उवाच ।
एवमुक्तस्तु धर्मात्मा ब्राह्मणः शुभकर्मकृत् ।
प्रसादं कृतवान्वीर रविसोमसमप्रभः ॥ ७

ब्राह्मण उवाच ।
शतं सहस्रं विश्वं च सर्वमक्षयवाचकम् ।
परिमाणं शतं त्वेतन्नैतदक्षयवाचकम् ॥ ८
यदा च वो ग्राहभूता गृह्णन्तीः पुरुषाञ्जले ।

---

K3 Ñ1 B6 Da D1 धीरः. — f) T G निर्मलः; M5 निश्चलः.

21 a) K0 सोपश्यत्. Ś1 K0.1.2 (after corr.).4 °स्माकं; K1 (before corr.).3 D5 °स्मांश्च; Ñ2.3 V1 B6 Dn G1 °स्मासु. — c) K0.4 Da1 D6 ग्राही°. — d) Ś1 K0.2.4 D6 भविष्यथ्वं; K2 भविष्यंति; Ñ1.2 V1 B1 Dn D4 T G चरिष्यथ.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ2 B Da Dn1.n2 D1.2.4 M6.8 अर्जुनतीर्थयात्रा (B5 °वनवास); T1 संभव. — *Adhy. name:* Ś1 K0.1.2 D5 अप्सरसां (Ś1 K2 अप्सरः-) शापमोक्षणं; K3 अप्सराःशापः; M6.8 वन्दाशापमोचनं (M8 °क्षणं). — *Adhy. no.* (figures, words or both): Dn2 215; D4m 225; D5 166; T1 221; T2 G1.4 176; G2 173; G3 177; G5.6 M 175. — *S'loka no.:* Da1 Dn M8 23. — *Aggregate s'loka no.:* Dn2 7830.

### 209

1 Ś1 K1 वर्पोवाच (sic); K0.2.4 V1 वर्चो°; K3 T1 मंदो°; Ñ1 वृंदो°; B1.3 वर्दो°; T2 G M6.8 वंदा; M6-8 विंदा. — a) Ñ1 प्रस्थिताः स्म (for प्रव्य°). — b) Ñ2 B D2.4 भारत°. — c) K0.2.4 D5 आयाताः; Ñ1 B1.3 Dn अयाम; V1 जगाम; S याचाम.

2 b) M8 मोहि° (for दर्पि°). — c) T2 G3-6 च (for स्म). — d) K4 भवान् (for द्विज).

3 a) K0 एषम्; K4 एक; T G शेष (for एष). — b) Ñ2 Da स्वयं प्राप्तस्; T2 G3.4 सा पर्याप्तिस्. — c) MSS. (as usual) शंसि°, शंशि° etc. — d) Ś1 K (except K3) D5 D2.4 Cd प्रलब्धुं. Ś1 K Ñ1 V1 D1 उप (for इह). T G (except G1) प्रलोभयितुमा°.

4 a) Ś1 K1 सृष्टौ; K2 सर्वाः. — b) Ñ2 V1 Dn D4 धर्मचारिणः. — c) T1 G3.4 अस्माद्. Ñ2 B1.3 Dn D4 वधे त्वं; B5 वर्तस्व; D1.2 वर्धत्वं (for धर्मज्ञ).

5 a) V1 D5 सर्वे° (for धर्म°). — c) K3 Ñ1.2 B1.3 Dn D2.4 एवं (for एष).

6 b) Ś1 K1 इष्टं (for शिष्टाः). — Da1 om. 6cd. — c) K0 D5 शिष्टं च (for शरणं). T G (except G1) M6 च (for त्वां).

7 Ś1 K Ñ1 D5 S om. उवाच (K0.4 Ñ1 M6 om. the ref.). — a) K2 Ñ2.3 B D (except D5) T2 G3-6 स (for तु). — c) Ś1 K (except K2) Ñ1 V1 शूर (for वीर). — d) Ś1 °शुचिप्रभः; G5.6 °शशिप्रभः.

8 Ś1 K1 D5 S om. उवाच. K3 विप्र उ°; K4 ऋषिरु°. — a) T G M6.8 विश्वं (for शतं). K3 Ñ2.3 B (B5 marg.) D (except Da) T1 G3.6 शतसहस्रं; V1 सहस्रमखं; B5 सहस्रं त्रिशं; T2 G1-4 M6.8 शतं सहस्रं (for सहस्रं विश्वं). Ñ2.3 B (B5 marg.) Dn G2 M8 तु (for च). Cd as in text. — b) K (except K1) Ñ V1 B D M6.8 °मक्षय्य°; Cd as in text. — c) T2 G3.4 °शतानां; G1 °शं तु तं. Ś1 K1 D5 त्वेवं; K0.2 Da त्वेव; Ñ1 चैवं; T1 G1 चैतं; T2 G3.4 चैतत्. — d) Ñ2 B D नेदम् (D4 एतदे°); Ś1 V1 सत्यं. K0.2 Ñ1.2 V1 B (B5 marg.) D T1 M6.8

त्कर्पति जलात्कश्चित्स्थलं पुरुषसत्तमः ॥ ९
तदा यूयं पुनः सर्वाः स्वरूपं प्रतिपत्स्यथ ।
अनृतं नोक्तपूर्वं मे हसतापि कदाचन ॥ १०
तानि सर्वाणि तीर्थानि इतः प्रभृति चैव ह ।
नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वशः ।
पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम् ॥ ११

वर्गोवाच ।

ततोऽभिवाद्य तं विप्रं कृत्वा चैव प्रदक्षिणम् ।
अचिन्तयामोपसृत्य तस्माद्देशात्सुदुःखिताः ॥ १२
क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम् ।
समागच्छेम यो नस्तद्रूपमापादयेत्पुनः ॥ १३
ता वयं चिन्तयित्वैवं मुहूर्तादिव भारत ।
दृष्टवत्यो महाभागं देवर्षिमुत नारदम् ॥ १४
सर्वा हृष्टाः स तं दृष्ट्वा देवर्षिममितद्युतिम् ।
अभिवाद्य च तं पार्थ स्थिताः स्म व्यथिताननाः ॥ १५
स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तत् ।
श्रुत्वा तच्च यथावृत्तमिदं वचनमब्रवीत् ॥ १६
दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै ।
पुण्यानि रमणीयानि तानि गच्छत माचिरम् ॥ १७
तत्राशु पुरुषव्याघ्रः पाण्डवो वो धनंजयः ।
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ॥ १८
तस्य सर्वा वयं वीर श्रुत्वा वाक्यमिहागताः । C. 1. 7879 B. 1. 217. 19 K. 1. 237. 19

अक्षय्य°; Ñ3 नाक्षय्य°.

9 a) K0 ग्रहीभूत्वा; K2 ग्रहो भूत्वा; K4 ग्रहीभूता. — b) K0.1.4 Ñ1 B2.5 Da Dn1.n3 T2 गृह्णती:; K3 गृह्णीते; V1 B6 D1 गृह्णीतः; G2.3.5 M6-8 गृह्णंति. — c) V1 उद्धरिष्यति; D5 उत्कृष्यति; T G उत्तारयेज्; M उद्धरिष्येज्. K2 Ñ3 B (except B6) D (except D1.2.6) तस्मात्; G1 कश्चित्; G2.3.4 (before corr.).6 किंचित्. — d) K (except K3) D5 स्थले; M6-8 पदा.

10 a) G2.3.4 (before corr.).5.6 सर्वे; M6-8 स्वस्थाः. — b) Ś1 K3 Ñ V1 B Da2 Dn1 D2.4.5 M6.8 स्वं (for स्व-). — d) Ñ1 स्वैरेष्वपि; D6 सहसापि; G5.6 भवितापि. B6 कथंचन; T3 G2-4 न किंचन.

11 a) Ś1 K1.3 तत्र; K0.4 ततः (for तानि). T G transp. सर्वा° and तीर्था°. — b) K3 Ñ1.2 B (except B6) D M ततः (for इतः). K (except K3) D6 T G3.4.5 हि (for ह). — c) Ś1 K1 तानीह; K0.3.4 D5 ह्येतानि; D1 चैवेह; M6 यान्येह (for नाम्नेह). — d) V1 चैव ह (for सर्वशः). D1 नाम्ना ख्यातानि सर्व°. — f) Ś1 च सर्वशः; T1 विशेषतः (for मनी°).

12 Ś1 K1 वर्पोवाच (sic); K0.3.4 V1 वर्चोवाच; K2 नंदो°; B1.3 वर्दो°; T1 नंदा; G1 M8 वंदा; M6-8 विंदा; D5 T3 G2-6 M5 om. the ref. — a) D2 तीर्थानि (for तं विप्रं). — b) K3 Ñ2 Dn D4 S अपि (M6-8 अभि-) (for मृत). — c) K4 चिंतयाना शुपक्रांताः; Ñ2.3 Dn1.n2 D4.5 आचिंत°; B1 आचिंतयामोपसृताः; B3 आचिंतयामास सृताः; B5 संचिंत्य मोहापसृताः; B5m M5.7 °यामाप°; B6 अचिंतयन्त्यापभृताः; T1 अचिंतयमपासृत्य; T3 G2-3 चिंतयंत्यो पसृत्याथ; G1.4.6 M8 °यामावसृत्य.

13 b) K4 स्थिताः कालेन; M5.6 कालेनानेन. B1 (m as in text) जनं (for नरं). — c) Ñ3 V1 अभि° (for समा°). — d) K4 आदाय तत्; Da1 T1 M6-8 आसादयेत्; G5.6 आवापयेत्.

14 a) K1.2 B D1.2 चिंतयित्वेह; K4 N Da Dn D4 S °त्वैव. — b) S1 K0.1 D2.5 मुहूर्तम्. — c) Ś1 K1 दृष्ट°. K0 B5 D6 महात्मानं; D1.2 T3 G1.3.4 °भाग. — d) Ś1 K1 महर्षिमुत; K0.3.4 Da1 °र्षिसुत; K3 Ñ1 T3 G4 °र्षिमथ; D1.2 °र्षिं तत्र.

15 a) K2 Ñ2.3 B D (except D6) संप्रहृष्टाः; Ñ1 ततो हृष्टाः. K2 सर्वाः (for दृष्ट्वा). — b) G6 अमरद्युतिं. — c) Ñ1 विप्रं (for पार्थ). K4 om. 15c–16c. — d) M6-8 स्थित्वा. K1 प्रव्यथि°; K3 Ñ V1 B D स्म व्रीडि°; K3 स व्यथी°; S व्रीडितचेतनाः (T1 G3 M5 °लोचनाः).

16 K4 om. 16abc (cf. v. l. 15). — a) Ñ1 G3 दुःखहेतुं. — b) K0 Ñ2.3 Dn D6 M6-8 तं; B6 Da2 T1 यत्. K2 °त्योथ तं वयं. — After 16ab, Ñ1 ins.:

2041* क्व गच्छामो वयं सर्वा यत्र लप्स्यामहे पुनः ।

— c) Ñ1 एतत् (for श्रुत्वा). K0 D5 स च; K2 Ñ2.3 B1.5 Dn D4 तत्र; Ñ1 श्रुत्वा; B3 तत्तु; B6 तं च; D2 तं तु (for तच्च). Ś1 K1 यथातथ्यं; K0 Ñ1 °तत्त्वं; V1 G1 तथा°.

17 Before 17, S (except M5.8) ins. नारदः. — a) K2.3 सागरोपांते; Ñ1 संगतानीह; D5 सागरद्वीपे. — b) Ñ1 यानि (for पञ्च). — d) V1 तत्र (for तानि). K4 G2 M गच्छथ.

18 a) Ś1 K0.3.4 D1.2.5 तत्रस्थाः; K1 Ñ1 तत्रस्थः; M5 तत्र वः. — b) K0 Ñ2 V1 B5.6 D (except Da2) पांडवेयो; K2 °वो वै; Ñ1.3 G1.3.5.6 M °घोष. — c) Ś1

दिदं सत्यमेवाद्य मोक्षिताहं त्वयानघ ॥ १९
एतास्तु मम वै सख्यश्चतस्रोऽन्या जले स्थिताः ।
कुरु कर्म शुभं वीर एताः सर्वा विमोक्षय ॥ २०
वैशंपायन उवाच ।
ततस्ताः पाण्डवश्रेष्ठः सर्वा एव विशां पते ।
तस्माच्छापाददीनात्मा मोक्षयामास वीर्यवान् ॥ २१
उत्थाय च जलात्तस्मात्प्रतिलभ्य वपुः स्वकम् ।
तास्तदाप्सरसो राजन्नदृश्यन्त यथा पुरा ॥ २२
तीर्थानि शोधयित्वा तु तथानुज्ञाय ताः प्रभुः ।
चित्राङ्गदां पुनर्द्रष्टुं मणलूरपुरं ययौ ॥ २३
तस्यामजनयत्पुत्रं राजानं बभ्रुवाहनम् ।
तं दृष्ट्वा पाण्डवो राजन्गोकर्णमभितोऽगमत् ॥ २

इति श्रीमहाभारते आदिपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

---

K1 Dn3 धर्मात्मा — After 18, D4 (marg sec m) S (except M8) ins

2042* इत्युक्त्वा नारद सर्वास्तत्रैवान्तरधीयत ।

19 M6 7 read 19ab twice, once with the S reading and again with the N reading ! — a) S (M6 7 first time) तस्मात्सर्वा (T1 सर्वास्तस्माद्) — b) M6 7 (both second time) s वाचम् (for वाक्यम्) K2 Ñ2 B1 Dn2 n3 D4 इतोगता (for इहा°) S (M6, 7 first time) निवसामा(T1 M6 5 °मो)त्र नित्यश — c) T2 G4 5 सर्वम् (for सत्यम्) T G3 4 अत्र (for अद्य)

20 a) K2, 3 V1 D2 च (for तु) K2 Ñ3 3 B D (except D5) G3 ता (for वै) Ś1 transp वै and सख्य — b) K1 शतद्रोण्यां (for चतस्रोऽन्या), see below Ko 1 4 V1 जल, S ह्रदे K Ñ2 3 V1 B1m Da Dn1 n2 D4 श्रिता (K2 चरा) (for स्थिता) Dn3 जलस्थिता ; D5 जलाश्रि° Ś1 शतद्रोणाजल श्रिता — c) S (except M6 8) एता अपि महाबाहो — d) Ñ1 3 B3 5 शापाद्, D1 2 पापाद् (for सर्वा) Ś1 ताश्चाप्याशु विमो°, Ko 1, 3 4 एताश्चाप्याशु मोक्ष°, V1 एता शापात्प्रमोचय, B5 एता अप्याशु मोचय, B6m Da एता शापाद्विमोचय; D5 एता स्त्याश्च मोचय S मुनिशापाद्विमो° (M6-8 एताश्चैवापि मोचय) K3 N2 B1 Dn D4 as in text

21 Ś1 K1-3 D2 T G M6-8 om उवाच, Ko, 4 V1 Da D5 M8 om the ref — a) S (except M6-8) तच्छ्रुत्वा (for ततस्ता) G3 पाडवस्तत्र — b) M6-8 °वा भरत सत्तम — c) G2 transp तस्मात् and शापात् Ś1 °पाद्विनीतात्मा

22 a) K2 V1 D1 G2 M (except M8) तु (for च) S (except M6-8) सर्वा (for तस्मात्) — b) D1 स्वत (for वपु) K4 D1 स्वय S (except M6-8) transp वपु° and स्वक — c) Ś1 Ko 3 4 Ñ1 तास्तत, K3 M6-8 तास्तथा; T1 तस्माद् — d) S पुरम् B1 (m as in text) तत्रैवांतरधीयत

23 a) S अथ (T2 G3 4 च) (for तु) — b) [illegible] °ज्ञाप्य ता — d) Ś1 मणिपूर°; Ko-3 4 Ñ1 V1 B6 D D1 5 मणिपूर°; K3 Ñ3 B1 3 5 मणपूर°; N2 Dn D4 मणिपूर पुनर्, T1 G1 3, 6 मणलूरु°

24 a) K3 Da Dn2 n3 D1 4 तां (for त) — After 24c, Ñ2 D4 (marg sec m) S ins a passage given in App I (No. 112) N B This passage, though included in all other printed edns, is missing even in Dn MSS, of v 1 1 96 6 (998*) ! — d) Ś1 K °भितो गत, V1 °र्णाभिमुखो ययौ, D1 2 G2 °भितो ययौ — After 24, almost all edns ins the following stanza which is not found in any MS hitherto collated except Ñ2

2043* आद्य पशुपते स्थान दर्शनादेव मुक्तिदम् ।
यत्र पापोऽपि मनुज प्राप्नोत्यभयद पदम् ।

— illuminating for the growth of the epic corpus !

Colophon om in B6 — Major parvan T2 G M सभव° (for आदि°) — Sub-parvan Ś1 K N2 B (B6 om) Da Dn2 n3 D1 3 4 M8, 8 अर्जुनतीर्थयात्रा (B1 °वनवास), T1 सभव — Adhy name Ś1 K1 M8 8 बभ्रुवाहनजन्म (M8, 8 °नोत्पत्ति); Ko 4 अप्सरसां शापमोक्ष ; D5 चित्रागदाप्राप्ति — Adhy no (figures, words or both) Dn3 216, D4m 226, D5 167, T1 222, T2 G1 4 177, G2 174 G3 178, G5 6 M 176 — Śloka no Dn 24, M8 35 — Aggregate śloka no Dn3 7873

## 210

1 Ś1 K (except Ko) S om उवाच (G3 om. the ref) — a) K2 °पराण्येव; Ñ2 V1 °पराण्यप; D5 °पराण्यपि M8 (inf lin as in text) 6-8 °परांतानि K1, 3 तीर्थे — Ś1 K1 (hapl.) om 1c-2b — c) B1 G5 6 च (for

## २१०

वैशंपायन उवाच ।
सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च ।
सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः ॥ १
समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् ॥ २
प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
तीर्थान्यनुचरन्तं च शुश्राव मधुसूदनः ॥ ३
ततोऽभ्यगच्छत्कौन्तेयमज्ञातो नाम माधवः ।
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ॥ ४
तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥ ५
ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत ।
किमर्थं पाण्डवेमानि तीर्थान्यनुचरस्युत ॥ ६
ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा ।
श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ॥ ७
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ ८
पूर्वमेव तु कृष्णस्य वचनात्तं महीधरं ।
पुरुषाः समलंचक्रुरुपजह्रुश्च भोजनम् ॥ ९
प्रतिगृह्यार्जुनः सर्वमुपभुज्य च पाण्डवः ।
सहैव वासुदेवेन दृष्टवान्नटनर्तकान् ॥ १०
अभ्यनुज्ञाप्य तान्सर्वानर्चयित्वा च पाण्डवः ।
सत्कृतं शयनं दिव्यमभ्यगच्छन्महाद्युतिः ॥ ११
तीर्थानां दर्शनं चैव पर्वतानां च भारत ।　C. 1. 7896 B. 1. 216. 12 K. 1. 233. 81

---

एव). Some MSS. °पूर्वेण.

2 Ś1 K1 om. 2^ab (cf. v. l. 1). — ^ab) V1 °द्रे यानि तीर्थानि पश्चिमे भरतर्षभः. — ^c) S transp. सर्वाणि and गत्वा स. — After 2, D4 (marg. *sec. m.*) S ins. a passage given in App. I (No. 113).

3 ^a) Ś1 K1 °देशे. T G (except G1) प्रभासं समनुप्राप्तं. — ^c) K3 तं; M6–8 तु (for च). Ñ2,3 B (except B6) Dn D4 सुपुण्यं रमणीयं च. — After 3, D4 (marg. *sec. m.*) S ins.:

2044* चारणानां तु वचनादेकाकी स जनार्दनः ।

4 ^a) M (except M8) तत्राप्यगच्छ°. — ^b) K1 नृप (for नाम). K4 Ñ V1 B D सखायं तत्र; Cd अज्ञातो नाम (as in text).

5 Ś1 K1 om. 5; G1 (hapl.) om. 5^a–8^b. — ^b) K0,2,3 N1 G2 (after corr.) जने; Da1 मुने; T1 G3,5,6 M पथि; T2 G2 (befor corr.) जले (for वने). — ^c) V1 रमेतां (for आस्तां). — ^d) K4 Ñ1 V1 उभौ (for ऋषी).

6 G1 om. 6 (cf. v. l. 5). — ^b) G5,6 तं च पार्थो ह्यपृच्छ°; M तत्कार्यं पर्य°. — G5,6 om. 6^cd. — ^c) K3,8 Ñ2,3 B D (except Dn2 D1,2) एतानि (for इमानि). T1 °र्थं पार्थ सर्वाणि; T2 G2,4 °र्थं पावनानीति. — ^d) Ś1 K1,2 तीर्थान्युपच(K1 °स)र°; K3 °न्यनुसर°; D4 °न्यनुसरासि च.

7 G1 om. 7 (cf. v. l. 5). — Before 7, T1 M2 ins. वैशं°. — ^a) Ś1 K (except K3) Ñ1 B3 Da D1 तस्य (for ततो). — ^c) V1 S (G1 om.) transp. उवाच and च. Ñ1 वाचं (for उवाच). Ś1 K Ñ1 स (for च). — ^d) S (G1 om.) त्वेवमे° प्रभो.

8 G1 om. 8^ab (cf. v. l. 5). — ^b) T1 समेतौ (for प्रभासे). Ś1 °पार्थिवौ. — ^d) Ś1 K3 M6–8 उप°; K1 अप° (for अभि°).

9 ^b) G1 M8,5 तु (for तं). — ^c) K2 Ñ1,3 V1 B D (except D1,5) समंतात्; B1m पुरस्तात्. K1,3 Ñ2,3 B D (except D5) मंडयांचक्रुः; T2 G3,4 तमलं°. — ^d) Ś1 K0,1,4 सर्वकामसमृद्धिभिः.

10 K2 (hapl.) om. 10^c–11^b.

11 K2 om. 11^ab (cf. v. l. 10). — ^a) N V1 B D (except D5) °ज्ञाय तान्; S (except M6–8) °ज्ञातवान्. — ^b) M6–8 तु (for च). — ^c) Da D1,2 transp. सत्कृतं and शयनं. — ^d) K0,3,4 Ñ1 D5 T G3–6 M सहाच्युतः; K2 G1,2 सहार्जुनः; Ñ2,3 Dn D4 महामतिः; B (except B6) समद्युतिः. — After 11, N (except K0,1 Ñ1) ins.:

2045* ततस्तत्र महाबाहुः शयानः शयने शुभे ।

12 T G M6 om. 12. — ^a) Ñ3 B Da1 Dn D4 नदीनां (for तीर्थानां). N2,3 B D (except D1,2,5) पल्वलानां च (for दर्शनं चैव). — ^b) K2,3 Ñ3 Dn D4 तथैव च; Ñ3 B Da D5 च दर्शनं (for च भा°). — ^c) Ś1

आपगानां वनानां च कथयामास सात्वते ॥ १२
स कथाः कथयन्नेव निद्रया जनमेजय ।
कौन्तेयोऽपहृतस्तस्मिञ्शयने स्वर्गसंमिते ॥ १३
मधुरेण स गीतेन वीणाशब्देन चानघ ।
प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा ॥ १४
स कृत्वावश्यकार्याणि वार्ष्णेयेनाभिनन्दितः ।
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ॥ १५
अलंकृता द्वारका तु बभूव जनमेजय ।
कुन्तीसुतस्य पूजार्थमपि निष्कुटकेष्वपि ॥ १६
दिदृक्षवश्च कौन्तेयं द्वारकावासिनो जनाः ।
नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः ॥ १७
अवलोकेषु नारीणां सहस्राणि शतानि च ।
भोजवृष्ण्यन्धकानां च समवायो महानभूत् ॥ १८
स तथा सत्कृतः सर्वैर्भोजवृष्ण्यन्धकात्मजैः ।
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः ॥ १९
कुमारैः सर्वशो वीरः सत्कारेणाभिवादितः ।
समानवयसः सर्वानाश्लिष्य स पुनः पुनः ॥ २०
कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते ।
उवास सह कृष्णेन बहुलास्तत्र शर्वरीः ॥ २१

इति श्रीमहाभारते आदिपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ समाप्तमर्जुनवनवासपर्व ॥

---

K1 सात्वतः; M (except M5) सत्वतः.

13 a) Ś1 K0.1.4 D5 स तथा; K2.3 Ñ2.3 B Da Dn D1.2.4 एवं स; G1 कथां स; M6–8 स कथं. — c) Ñ2.3 B3 Da1 Dn D4.5 °योपि ह°; B5 कुंतीपुत्रो ह°. — d) K2.3 Ñ V1 B D °संनिभे; T G (except G1) सत्यविक्रमः.

14 a) Ś1 K1 M6–8 च; K2.3 Ñ2.3 B D (except D1.2) एव; M5 सु- (for स). — b) T G (except G1) वाद्यशब्देन. Ś1 Da M6–8 भारत; K1 वानघ; Ñ3 Dn D1.5 चैव ह. — cd) M6–8 transp. बुबुधे and स्तुतिभिर्.

15 a) M5 कृत्वा च (for स कृत्वा). Ś1 K0.3 B3 D5 °कर्माणि. — b) Ś1 °वंदितः. — After 15ab, S ins.:

2046* वार्ष्णेयं समनुज्ञाप्य ततो वासमरोचयत् ।
तथेत्युक्त्वा वासुदेवो भोजनं वै शशास ह ।
यतिरूपधरं पार्थं विसृज्य सहसा हरिः ।
[ (L. 1) M6–8 °ज्ञाप्य. ]

— d) Here and below Ś1 द्वारिका (for द्वार°).

16 S (except M6–8) om. 16cd. — c) K2.3 Ñ2.3 V1 B D (except D1) M6–8 कुंतीसुतस्य. — d) K0.4 D1 अभि-; Ñ1 अथ; M6–8 इह (for the first अपि). K0 M7.8 निष्कुंट°.

17 a) Ñ3 B5 D दिदृक्षंतश्च. S गोविंदं. — d) Ñ1 स्तुवंतश्च सह°. — After 17, T G (except G1.3) ins.:

2047* क्षणार्धमपि वार्ष्णेया गोविन्दविरहाक्षमाः ।
कौतूहलसमाविष्टा भृशमुत्प्रेक्ष्य संस्थिताः ।
[ (L. 1) T1 G5.6 °क्षताः. ]

18 a) Ś1 K (except K1) Ñ1 D3 अथावलोके (for अव°). — b) V1 शर्मिस्तु शतशस्तथा. — d) V1 °बोभयन्महान्.

19 a) K1 सत्कृतः (for स तथा). M3.5 transp. and तथा. — b) Ś1 K Ñ1 D1.3.4 °कादिभिः. — c) °द्याभिवाद्यार्हान्.

20 Ś1 om. 20; G1 (? hapl.) om. 20ab. — a) सत्कृतो; T2 G3–6 सर्वतो. — b) K0 D5 °वंदितः; K1–4 V B5 °पूजितः; Ñ2.3 B1.3.6 Dn °चोदितः; M3 (inf. lin. as in text).5 °नंदितः. — d) K4 आभाष्य. K1 D1 (except T1) च (for स).

21 b) Ñ1 वृष्णिभोजस°. — For 21, S subst.:

2048* कृष्णः स्वभवनं रम्यं प्रविवेश महाद्युतिः ।
प्रवासादागतं सर्वा देव्यः कृष्णमपूजयन् ।
[ (L. 1) M3.5 दिव्यं (for रम्यं). G1 M3.5 महायशाः. — (L. 2) T2 G3–5 प्रभासाद्. ]

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan.* K Ñ3 B Da Dn1.n3 D1.4.5 M5 अर्जुन(B6 om.)तीर्थयात्रा (B1 °वनवास); T1 संभव; to it K0.4 add समाप्त. — *Adhy. name* · Ś1 K1 रैवतकगिरिम(Ś1 °स)हः; K0.2.4 D5 द्वारका(K3 °काभि)गमनं; M3 वासुदेवागमः. — *Adhy. no.* (figures, words or both): Dn1 217; Dam 227; D3 168; T1 223; T2 G1.4 178; G2 175; G3 179; G5.6 M 177. — *Śloka no.:* Dn 21; M3 40. — *Aggregate śloka no.:* Dn1 7894.

## 211

1 Ś1 K (except K0) S om. उवाच. — In Ś1 the portion of the text from कतिपया° (in a) up to

वैशंपायन उवाच ।
ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ ।
वृष्ण्यन्धकानामभवत्सुमहानुत्सवो नृप ॥ १
तत्र दानं ददुर्वीरा ब्राह्मणानां सहस्रशः ।
भोजवृष्ण्यन्धकाश्चैव महे तस्य गिरेस्तदा ॥ २
प्रासादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः ।
स देशः शोभितो राजन्दीपवृक्षैश्च सर्वशः ॥ ३
वादित्राणि च तत्र स्म वादकाः समवादयन् ।
ननृतुर्नर्तकाश्चैव जगुर्गानानि गायनाः ॥ ४
अलंकृताः कुमाराश्च वृष्णीनां सुमहौजसः ।
यानैर्हाटकचित्राङ्गैश्चञ्चूर्यन्ते स्म सर्वशः ॥ ५
पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।
सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः ॥ ६
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।
अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ॥ ७
तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान् ।
उपगीयमानो गन्धर्वैः स्त्रीसहस्रसहायवान् ॥ ८
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ ।
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ॥ ९
अक्रूरः सारणश्चैव गदो भानुर्विडूरथः ।
निशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च ॥ १०
सत्यकः सात्यकिश्चैव भङ्गकारसहाचरौ । C. 1. 7019 B. 1. 219. 11 K. 1. 230. 11

°मभवत् (in $^{c}$) is lost on a broken part. — $^{a}$) T1 G1.2 M °पयाहस्सु. — $^{b}$) S तत्र रैव°. — $^{d}$) K1.3 Ñ2 B D (except D5) उत्सवो नृपसत्तम.

2 Ś1 missing for $2^{bc}$. — $^{b}$) K (except K1) Ñ V1 Dn D5 ब्राह्मणेभ्यः. — $^{d}$) K3 m.4 V1 Dn1 D5 महेंद्रस्य; K3 महांतश्च; T1 महत्यस्मिन्; T2 G1.4 (after corr.) M2 महे तस्मिन्; G2.3.4 (before corr.).5.6 M6–8 मखे तस्मिन्. Ñ3 गिरस्तथा; S गिरौ तथा (G1.3 M6–8 °दा). Cd cites महः.

3 $^{a}$) Ś1 K0.1.4 Ñ1 पादपै (for प्रासादै). — Ś1 missing from च (in $^{a}$) up to दीप (in $^{d}$). K1 S (except M6–8) तु (for च). — $^{b}$) K0.3 Ñ3 V1 तत्र (for तस्य). K4 समीपतः. — G1 om. $3^{cd}$. — $^{c}$) K1 °शः पूजितो. — $^{d}$) K2 फल°; Ñ1 B (except B5) D कल्प°; Ñ3 V1 नदी°; Cd Arjp दीप° (as in text). Ś1 K4 च सर्वतः; K0.2 S (G1 om.) च शोभितः (M3.5 समंततः).

4 V1 (hapl.) om. 4–5. Ś1 missing from स्म (in $^{a}$) up to जगुर्गा° (in $^{d}$). — $^{a}$) K3 Ñ B D तत्रान्ये (Ñ3 तान्येव); T2 G3–4 तत्र स्युर्. — $^{b}$) K0 चाथ वादयन्. — M6–8 om. $4^{c}$–$5^{d}$. — $^{c}$) K0.4 D1.6 चापि (for चैव). — $^{d}$) K2 Ñ3 B Da Dn1.n2 D4 गेयानि; K4 सामानि; Ñ3 तत्रैव; Dn3 D1.2 S (M6–8 om.) गीतानि. Ñ3 Dn3 D2.3 S (M6–8 om.) गायकाः.

5 V1 M6–8 om. 5 (cf. v. l. 4). — Ś1 missing from स्र (in $^{a}$) up to चञ्चूर्यन्ते (in $^{d}$). — $^{b}$) K3 Ñ2.3 B3.6 D T2 G2–4 M3 (*inf. lin.* as in text) सुमहौजसां. — Ñ1 om. $5^{c}$–$6^{d}$. — $^{c}$) K1 कांचन° (? gloss); K3 Ñ2.3 V1 B D (except D5) हाटकचित्रैश्च. — $^{d}$) K2 B1.3 च (for स्म). M3.5 भारत (for सर्व°).

6 Ñ1 om. 6 (cf. v. l. 5); M3 (? hapl.) om. 6–7.

7 M3 om. 7 (cf. v. l. 6). — $^{a}$) Ś1 K (except K3) D5 हलायुधः. — $^{b}$) Ś1 K1 रेवत्या. — $^{c}$) Hypermetric! cf. $8^{c}$. Ś1 K D5 अनुगीय° (K2 m as in text); T2 G2 अभिगम्य°; G3 अभेद्य°. T G M5 बहुभिर्. — K1 D1 (hapl.) om. $7^{d}$–$8^{c}$.

8 K1 D1 om. $8^{abc}$ (cf. v. l. 7). — $^{c}$) Hypermetric! K2 प्रगीय°; K3 Ñ Dn D2.4.5 अनुगीय°; V1 B1.3 Da अनुगम्य° (cf. $7^{c}$); B3 अनुगीतः स.

9 $^{a}$) K2(m as in text).4 G3 M3 रौहिणे°; Cd as in text. Some MSS. शांबश्च. — $^{b}$) K3 D2.5 S (except M3) समर(M6–8 परम)दुर्जयौ. — $^{c}$) Ś1 K1.2.4 Da1 D5 °माल्यांबर°.

10 $^{b}$) K3.3 Ñ B D (except D5) गदो बभ्रुर्. N (except Dn1) T1 G1.2.5.6 विदू(Ś1 °भू)रथः; cf. 1. 90. 42. — $^{c}$) Ś1 निषद°; K1 °शाह°; K2 °सित°; K3 °पथ°; T2 G4 निःशठ°; G2.3 निःशंक°.

11 $^{b}$) K0.4 D5 भृंगकार; K2.3 भद्रकार; T1 G1 भंगाकार-. K0.2.3 Da -सहाचरौ; K4 -महाबलः; Ñ1

हार्दिक्यः कृतवर्मा च ये चान्ये नानुकीर्तिताः ॥ ११
एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक् ।
तमुत्सवं रैवतके शोभयांचक्रिरे तदा ॥ १२
तदा कोलाहले तस्मिन्वर्तमाने महाशुभे ।
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः ॥ १३
तत्र चङ्क्रम्यमाणौ तौ वसुदेवसुतां शुभाम् ।
अलंकृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ १४
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ।
तं तथैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ १५
अथाब्रवीत्पुष्कराक्षः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ १६
ममैषा भगिनी पार्थ सारणस्य सहोदरा ।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥ १७

अर्जुन उवाच ।

दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैव संपन्ना कमिवैषा न मोहयेत् ॥ १८
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥ १९
प्राप्तौ तु क उपायः स्यात्तद्ब्रवीहि जनार्दन ।
आस्थास्यामि तथा सर्वं यदि शक्यं नरेण तत् ॥ २०

वासुदेव उवाच ।

स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ २१
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतोः शूराणामिति धर्मविदो विदुः ॥ २२
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।

---

-महाबलौ; Ñ2 B Dn D4 -महारवौ; D1.2 -महोदरौ; M5 -सखेचरौ; M6-8 -सहायकौ. — c) K2.3 Ñ2.3 V1 B D (except D5) °थ उद्धवश्चैव.

12 After 12, S ins.:

2049* वासुदेवो ययौ तत्र सह स्त्रीभिर्गुणान्वितः ।
दत्त्वा दानं द्विजातिभ्यः परिव्राजमपश्यत ।

13 a) Ś1 K0.3.4 D3 ततः; K2 B1.3.5 चित्रे; K3 तत्र; N1 D1.2 तथा; Da1 Dn D4 चित्र-. Ñ2 Dn D4 S (except M5.6) कौतूहले. — b) K2 m.3 Ñ V1 B D (except D5) महाद्भुते; K4 महे शुभे; S महोत्सवे.

14 a) Ś1 K0.1 ततः (for तत्र). Ñ1.2 B (except B1) Dn D2.4 G1 M5.8 चंक्रम°; D6 चंक्रममाणानां. — c) K0.3.4 N1 V1 S (except G1 M6.7) स्वलंकृतां. — d) K1 V1 B3 Dn1.n3 T G (except G3.6) M5 सुभद्रां ददृशुस्तदा; D1.2.4 सुभद्रां ददृशेऽर्जुनः.

15 a) G3 दृष्ट्वैतामर्जुनस्यास्य-. — c) K0 D5 S स्व(T2 G2-4 घा)नेकाग्र°; K3-4 B3.6 D1.2.4 (after corr.) तदेकाग्र°; Ñ3 B1.4 Da Dn D4 (before corr.) तदैकाग्र°; Cd अनेकाग्र°.

16 a) Ñ2 B3.6 D (except Da D5) अब्रवीत्पुरुष व्याघ्रः; S अब्रवीत्पुंडरीकाक्षः.

17 a) M6-8 ममैव. — b) T G सहोदरी. — After 17ab, K2-4 N2.3 V1 B D ins.:

2050* सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।

— d) B3 D1.2 °रं स्वकं. — After 17, M6-8 (which om. the ref. before 18) ins.:

2051* अब्रवीत्पुण्डरीकाक्षं प्रहसन्निव भारत ।

(cf. 16ab and v. l.).

18 Ś1 K1 S om. उवाच (M6-8 om. the ref.). — b) Ś1 K4 Ñ1 एव च; Ñ3 B1 Da1 Dn चैषा (for चैव). G3 रूपयौवनसंपन्ना. — d) B (except B1) Dn3 (by corr.) कमेवैषा; G1 कथं चैषा. K0 D5 न क्षोभयेत्; G1 (before corr.) मनो हरेत्.

19 b) K3 स्वयमेव भ°. N1 स्वयं (for ध्रुवम्). — T2 G2-4 ins. after 19ab; G5.6, after 19:

2052* देववृन्दः सदा त्वां तु स्मृत्वा विजयतेऽसुरान् ।
तव संदर्शनात्स्वाभिप्रापयं न हि तत्किमु ।

— c) G (except G1.4) वार्ष्णेय.

20 a) Ś1 K0.1.4 B3 प्राप्तौ च; G1 प्राप्तुं तां. T1 तत्प्राप्तौ क उपायं मां. — b) Ś1 K0.1 तत्प्रब्रूहि; K2.3 Ñ1 V1 B1.6 D S (except M6-8) तं म°; K4 तद्ब्रूहि त्वं. — c) K2 Ñ V1 B D M6-8 तदा; K4 G1 M5 यथा; T1 G6 इति तत्. — d) K3 कर्तव्यं मानुषेण तत्; D2 यदि शक्यं जनार्दन.

21 Ś1 K1 S om. उवाच. — b) K4 क्षत्रियर्षभ; M6-8 पुरुषोत्तम. — c) B3 M5 स तु. Ś1 K1 संगमितः पार्थे; D2 संशयितार्थश्च. Cd cites संशयितः (as in text). — d) K3 निवाहस्यानि°; S (except G1.3 M5.8) स्वभाव[:]स्यावि°.

22 b) K1 विशिष्यते; G3 विशां पते. — c) Ñ1.3 M5 निवाहहेतुः. S कन्यार्थं. — d) T2 G2-4 वेदविदो.

हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ २३

वैशंपायन उवाच ।

ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान्पुरुषान्राजन्प्रेषयामासतुस्तदा ॥ २४
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै ।
श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः ॥ २५

इति श्रीमहाभारते आदिपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

## २१२

वैशंपायन उवाच ।

ततः संवादिते तस्मिन्ननुज्ञातो धनंजयः ।
गतां रैवतके कन्यां विदित्वा जनमेजय ॥ १
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ।
कृष्णस्य मतमाज्ञाय प्रययौ भरतर्षभः ॥ २
रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
सैन्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ ३
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना ॥ ४
संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् । C. 1. 7235 B. 1. 220. K. 1. 244.

---

23 $^{a}$) Ś1 K0.1.4 N1 अतः प्रचिंत्य क°. — After $3^{ab}$, T2 G (except G1) ins.:

2053* यतिरूपधरस्त्वं तु यदा कालविपाकता ।

— $^{c}$) Da तस्याः; S चा(G3 वा)स्याः. — $^{d}$) K0 D5 कस्ते (द; D1 को वेद वै (by transp.).

24 Before 24, only Dn2 ins. वैशं° उ° (as in text), and G1.2 M6-8 वैशं°; the rest om. the ref. — $^{b}$) Ś1 K1 विनिश्चित्य विहृत्य च (Ś1 त्वौ). — $^{c}$) K2 Ñ2.3 B D अन्यान् (for राजन्).

25 $^{b}$) K0.3.4 °प्रस्थ(K4 °स्थे)स्थिताय वै; T1 °प्रस्थनिवासिने. — $^{c}$) T1 G1 M महाबुद्धिर्. — $^{d}$) K1 च रांडवः; T1 ससारसष्कः; T2 G2-4 समाहितः; G1 समावृतः; G5.6 M (except M5) समावृकः. — After 25, S ins.:

2054* भीमसेनस्तु तच्छ्रुत्वा कृतकृत्यं स मन्यते ।
इत्येवं मनुजैः सार्धमुक्त्वा प्रीतिमुपेयिवान् ।

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K N2 B3.5.6 Da Dn1.n2 D1.2.4.5 M3.5 सुभद्राहरण (K3 अर्जुनतीर्थयात्रा and सुभद्राहरण); B1 अर्जुनतीर्थयात्रा. — *Adhy. name:* K0.4 वासुदेवार्जुन(K4 °नयोर्)मंत्रः; K1 वासुदेवमंत्रः. — *Adhy. no.* (figures, words or both): K2 213; Dn2 218; D4m 228; D3 169; T1 224; T2 G1.4 179; G2 176; G3 180; G5.6 M 178. — *S'loka no.:* Dn M5 25. — *Aggregate s'loka no.:* Dn2 7919.

### 212

☞ The sequence of st. 1–8 in S (which om. $6^{cd}$, $7^{c}$–$8^{b}$) is: $1^{ab}$, 2, 6, $7^{ab}$, $1^{cd}$ (followed by passage No. 114 given in App. I, see below), $3$–$5^{ab}$, $8^{cd}$.

1 K1.3.4 D2 S om. उवाच; K2 om. the ref. Ś1 om. up to संवादि- (in $^{a}$). — $^{a}$) K0.3.4 संनिश्चिते; K1 N1 संचारिते; Ñ3 V1 B3.6 समु°; B1.5m संव°; Da संमु°. S चारैः संचारिते त°; Arjp (?) संचारिणा तु तच्छ्रुत्वा. Cd cites संचारिणा (= वार्ताहरेण). — T2 G2.4 om. $1^{cd}$. — $^{c}$) S (T2 G3.4 om.) रैवतकात्. — $^{d}$) K2 विनिश्चित्य शुभाननां; S (T2 G2.4 om.) प्रविष्टां द्वारकां प्रति. — A passage given in App. I (No. 114) is ins. in S after $1^{cd}$ (in T2 G2.4, which om. $1^{cd}$, after $7^{ab}$); in D4, suppl. fol. *sec. m.*, after $2^{ab}$.

2 For the sequence of S cf. v. l. 1. — $^{a}$) K2 ततोर्जुनोभ्य°. After $2^{ab}$, D4 ins. a passage given in App. I (No. 114); cf. v. l. 1. — $^{c}$) Ñ2 Dn D2.4.5 आदाय; S आस्थाय. — $^{d}$) K4 पुरुष°; Some MSS. °र्षभ. — After 2, S ins.:

2055* वृत्तैः सहोत्सवैरेवं कृष्णयोऽप्यगमत्पुरीम् ।
[ M वृत्तोत्सवे रैवतके (for the prior half). ]

3 For sequence of S cf. v. l. 1; G3 om. $3$–$5^{ab}$. — $^{b}$) Ś1 K0-3 S (G3 om.) सैन्य- (as in text); B5.6 सैव्य; the rest शैब्य-.

4 G3 om. 4 (cf. v. l. 3). — $^{b}$) K0 Ñ1 V1 D2.5 T2 G4-6 -वर-; K2 -रथ-; D1 इव (for -रव-). — $^{c}$) T2 G4 ज्वलितार्क°. — $^{d}$) T2 G4 °नाशिना.

5 G3 om. $5^{ab}$ (cf. v. l. 3). K3 reads $5^{abc}$ in marg. — After $5^{ab}$, S (except G3) ins.:

2056* युक्तः सेनानुयात्रेण रथमारोप्य माधवीम् ।

मृगयाव्यपदेशेन यौगपद्येन भारत ॥ ५
सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्य सह रैवतम् ।
दैवतानि च सर्वाणि ब्राह्मणान्स्वस्ति वाच्य च ॥ ६
प्रदक्षिणं गिरिं कृत्वा प्रययौ द्वारकां प्रति ।
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ॥ ७
ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम् ।
रथेनाकाशगेनैव प्रययौ स्वपुरं प्रति ॥ ८
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिको जनः ।
विक्रोशन्प्राद्रवत्सर्वो द्वारकामभितः पुरीम् ॥ ९
ते समासाद्य सहिताः सुधर्मामभितः सभाम् ।
सभापालस्य तत्सर्वमाचख्युः पार्थविक्रमम् ॥ १०
तेषां श्रुत्वा सभापालो भेरीं सांनाहिकीं ततः ।
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ॥ ११
क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा ।
अन्नपानमपास्याथ समापेतुः सभां ततः ॥ १२
ततो जाम्बूनदाङ्गानि स्पर्ध्यास्तरणवन्ति च ।
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च ॥ १३
भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः ।
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः ॥ १४
तेषां समुपविष्टानां देवानामिव संनये ।
आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः ॥ १५
तच्छ्रुत्वा वृष्णिवीरास्ते मदरक्तान्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुरहंकृताः ॥ १६
योजयध्वं रथानाशु प्रासानाहरतेति च ।

---

[ T2 G4.6 शुस-; G5 शुसः (for शुक्तः). ]
— S om. $5^{cd}$. — $^{d}$) Ñ1 चानघ. K3.4 Ñ3 B3 D1.2 स (B3 प्र-) ययौ भरतर्षभ (Ñ3 D1 °भः); V1 ययौ रैवतकं गिरिं; B5.6 Dn D4.5 प्र(B5 स)ययौ पुरुषर्षभः.

6 For sequence of S cf. v. l. 1. — $^{a}$) K2 S ॰त्वथ. — $^{b}$) Ś1 K1 °भ्यर्च्य मह-; K0 °भ्यर्च्य स ह; K2.3 corrupt; N1 समभ्यर्च्य च; Ñ3 B (except B1) D (except D5) °भ्यर्च्यैव हि. M (except M8) दैवतं.

7 $^{a}$) Ś1 K0 Ñ2 Dn D3.4.5 गिरेः; K3 स्वयं. — After $7^{ab}$, Ñ1 ins.:

2057* सुभद्रां कृष्णभगिनीं स्त्रीभिः परिवृतां तदा ।,
while S reads $1^{cd}$ (om. in T2 G3.4; cf. v. l. 1). — S om. $7^{c}$–$8^{b}$ (G2 om. $7^{c}$–$14^{d}$). — After 7, K (except K1) Ñ3 V1 B D ins.:

2058* सुभद्रां चारुसर्वाङ्गीं कामबाणप्रपीडितः ।

8 S om. $8^{ab}$, G2 om. $8^{cd}$ also (cf. v. l. 7). — $^{c}$) Ś1 K1 आकाशवेगेन; K2.4 Ñ2 V1 B1.2.6 Dn1.n3 D4 कांचनाङ्गेन; Ñ1 कामयानेव; Dn2 D1.2 कामवे(D2 °यो)गेन. — $^{d}$) K4 G1.6 स्वपुरीं.

9 G2 om. 9 (cf. v. l. 7). — $^{b}$) K3 N3 V1 B D T1 °का जनाः. — $^{c}$) K0 T2 G1.4-6 व्या(K0 G1 व्य)क्रोशत्. K3 Ñ3 V1 B D T1 विक्रोशन्तो(D5 T1 व्याक्रोशन्प्रा)द्रवन्सर्वे.

11 G2 om. 11 (cf. v. l. 7). — $^{b}$) T1 G1 M संनाद्यं(G1 °धीं)स्तदा; T2 G3 सांनाद्यं(?)स्तदा; G4.6 सांनाह्यस्तदा.

12 G2 om. 12 (cf. v. l. 7). — $^{a}$) Ñ1 क्रुद्धास् (for क्षुब्धास्). T2 G3-6 क्षोभितास्तेन; G2 क्षुधर्मास्तेन (all these om. अथ). — $^{b}$) Ś1 K0.4 B1 तथा; Ñ1.2 तत°. — After $12^{ab}$, S (except G2) ins.:

2059* अन्तर्द्वीपारसमुत्पेतुः सहसा सहितास्तदा ।
[ G1 M5 सभां वै; M6-8 तथैव (for सहसा). T1 सहसैव क्रुते तदा. ]

— $^{c}$) Da D1.2 अथापास्य (by transp.); S (G2 om.) अपाहाय. Ś1 K1 Ñ1 °पानाद्य(°नम)पास्यैव. — $^{d}$) K3 Ñ3 V1 B D (except Da2 D5) T2 G3.4-6 समंततः; Ñ3 तत सभां (by transp.).

13 G2 om. 13 (cf. v. l. 7). — $^{a}$) Ñ3 V1 B5.6 D सत्र. — $^{b}$) K2 T2 G3.4.6 परार्ध्यास्तरणानि; G2 चित्रास्तरण°.

14 G2 om. 14 (cf. v. l. 7). — $^{b}$) G1 M1-4 °महाबलाः. — D1 om. $14^{c}$–$15^{d}$. — $^{c}$) Ś1 K0.2.4 Ñ1 बहुशः. — $^{d}$) K1 काष्ठानीव. T2 G3.4 दीप्यमानानि सर्वशः.

15 D2 om. 15 (cf. v. l. 14). — $^{b}$) T2 G (except G1) संगमे. — $^{d}$) Ñ1 सभानुगः; T1 तथाविधं; G1 सभागुरु°; M समागतः (M1.2 °तान्) (for सहा°).

16 $^{a}$) Ñ1 °त्वा वृष्णि°. — $^{b}$) Ñ3 V1 B6 D (except D5) मदसंरक्त°; B3 क्रोध°. — $^{c}$) K3 B पार्थिव. — $^{d}$) K0.4 D5 असमर्पिताः; T2 G (except G1) महायशाः (for अहं°). T1 यादवाः सहसा द्रुताः.

17 $^{a}$) G1 योजयित्वा. — After $17^{a}$, S ins.:

2060* नागानश्वांस्तथैव च ।
कवचानाहर क्षिप्रं.

धनूंषि च महार्हाणि कवचानि बृहन्ति च ॥ १७
सूतानुच्चुक्रुशुः केचिद्रथान्योजयतेति च ।
स्वयं च तुरगान्केचिन्निन्युर्हेमविभूषितान् ॥ १८
रथेष्वानीयमानेषु कवचेषु ध्वजेषु च ।
अभिक्रन्दे नृवीराणां तदासीत्संकुलं महत् ॥ १९
वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥ २०
किमिदं कुरुथाप्रज्ञास्तूष्णीं भूते जनार्दने ।
अस्य भावमविज्ञाय संक्रुद्धा मोघगर्जिताः ॥ २१
एष तावदभिप्रायमाख्यातु स्वं महामतिः ।
यदस्य रुचितं कर्तुं तत्कुरुध्वमतन्द्रिताः ॥ २२
ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात् ।
तूष्णीं भूतास्ततः सर्वे साधु साध्विति चाब्रुवन् ॥ २३
समं वचो निशम्येति बलदेवस्य धीमतः ।
पुनरेव सभामध्ये सर्वे ते समुपाविशन् ॥ २४
ततोऽब्रवीत्कामपालो वासुदेवं परंतपम् ।
किमवागुपविष्टोऽसि प्रेक्षमाणो जनार्दन ॥ २५
सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत ।
न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः ॥ २६
को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति ।
मन्यमानः कुले जातमात्मानं पुरुषः क्वचित् ॥ २७
ईप्समानश्च संबन्धं कृतपूर्वं च मानयन् ।
को हि नाम भवेनार्थी साहसेन समाचरेत् ॥ २८
सोऽवमन्य च नामास्माननादृत्य च केशवम् । C. 1. 7062 B. 1. 220. 2 K. 1. 244. 6

[ (L. 2) T2 G2–4 °चान्याहर (G2 °रत्); G5.6 °चानाहरन्; G1 °चानक्षतान्. ]
— K3 (hapl.) om. 17c–18b. — d) G1 M3 तोमराणि. B8 Da D1.3 महांति च.

18 K3 om. 18ab (cf. v. l. 17). — a) Ñ1 च चुक्रु°; T2 G (except G1) विचुक्रु°. — b) K0 रथानायोजयेति; D3 रथानां योजयेति; T1 रथानाहरतेति. — d) Ñ1 T1 हेमपरिष्कृतान्. Ś1 K1 आनिन्युर्हेमभू°; N3 B6 D1,2,4 अयुंजन् हेमभू° (D1 हेममालिनः).

19 a) T2 G3–6 महत्सु (for ध्वजे°). — c) D1 आक्रंदे च; G5.6 महास्कंधे. Ś1 K1.2 M5.6 °क्रंदेन वी°; T2 G3–4 महायादववी°. — d) K2.3 Ñ3 V1 B Da D3.5 G1 तुमु(or °म)लं; M6–8 क्रंदनं.

20 a) K2 B (except B6) D1 तदा (for ततः).

21 a) Ś1 K2 D1.6 °ताम्रा°; K0.1 N3 °ताम्र°; N1 पुरुषाः प्रा°; T1 M स्वकृतप्र°; T2 G चाकृतप्र° (G1 तु कृतं प्रा°). — K0 (? hapl.) om. 21d–22a. — d) Ś1 K1 G3–6 M5 मेघ°; K3.4 D5 किमु गर्जथ (K3 °त); D1 मोह°; D3 साहच°.

22 K0 om. 22a (cf. v. l. 21). — b) Ś1 K2 D1.3 G2.5.6 आख्यातुं स्वं; G1 M आख्यातीव. B8 सु- (for स्वं). T2 G (except G1) °तु मम यद्धृदि. — c) Ś1 K0.1.4 यदस्मै; K3 यद्यस्य. K2–4 B1 Dn D2 G1 M5.6 रुचिरं. T1 corrupt.

23 a) Ñ1 M5 °स्तद्वचनं; T2 G (except G1) °स्ते वचनं. — c) K0.3 D1.2.3 G3 M5 तूष्णीभूतास् (D3 °भूत्वा). — d) Ś1 K0.1.4 D5 T1 अथ (for च).

24 a) K0.3.4 सु(K4 स)संवादं; B1 D2.4.5 समं वाचो; B3.5 सर्वे वाचं; B6 सर्वे व°. K0 D5 निशम्यैते; Ñ3 B8 Da Dn D4 °म्यैव; B1.3.5 °म्याथ. K3 V1 D1 समं ततो(V1 समवाये)थ निःशब्दे; T1 G5.6 समवाच(°वोचं)स्तु निःशब्दा; T2 G3–4 यादवास्त्वपि (G3 om. तु) निःशब्दा; G1 समा वाचा तु निःशब्दा.

25 ab) K2.3 Ñ3 B (except B6) वचो रामो वासु°; Ñ3 Dn D4 वासुदेवं वचो रामः; T1 G1 M वासुदेवं कामपालः (by transp.). Ś1 K1 अरिंदमं; K4 Ñ2 B D M (except M3) परंतपः. — After 25ab, S ins.:

2061* त्रैलोक्यनाथ हे कृष्ण भूतभव्यभविष्यकृत् ।

[ Before the line, T1 ins. कामपालः; G1 बलः; M5–8 बलदेवः. ]

— c) T2 M6–8 किमिवागोप°; T2 G3.4 किमुपांशूप°; G5.6 किमु वाग्रोप°. — T1 om. 25d–26a. — d) V1 मुहुर्मुहुः; S (T1 om.) जनाकुलं.

26 T1 om. 26a (cf. v. l. 25). — b) G1 M (except M3) अर्चितः (for अच्युत).

27 a) Ś1 K0.1.4 Ñ1 D1.2.4 भुक्त्वैव (Ñ1 °क.वाति; D2 °क्त्वा हि) तत्रान्नं; G6 तत्रैव भित्वाग्रां. — b) G3 पापकृद् (for भाज°). Ś1 K1 भक्तुम्. T1 G5 भोक्तुमर्हति पापकृत्; G6 अपीमां भोक्तुमर्हसि. — c) Ś1 K (except K3) D5 जन्म; T2 G3 M5 जातः (for जातम्).

28 a) K2 Ñ3 B3.4 D1 ईप्सन्नेव हि; Ñ3 B1.6 Da Dn D4 इच्छन्नेव हि; D2 °मानः स्व-. — b) K3.4 Ñ2 B1.3.5 D (except Da2 D5) M6.8 कृतं (for कृत-). T1 सुमारयन्; G1 समानवै; M समानयेत् (M5 °नयन्; M8 °पयत्).

29 30 प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः ॥ २९
कथं हि शिरसो मध्ये पदं तेन कृतं मम ।
मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः ॥ ३०
अद्य निष्कौरवामेकः करिष्यामि वसुंधराम् ।
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः ॥ ३१
तं तथा गर्जमानं तु मेघदुन्दुभिनिःस्वनम् ।
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा ॥ ३२

इति श्रीमहाभारते आदिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ समाप्तं सुभद्राहरणपर्व ॥

## २१३

वैशंपायन उवाच ।
उक्तवन्तो यदा वाक्यमसकृत्सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंहितम् ॥ १
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयमसंशयम् ॥ २
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ३
प्रदानमपि कन्यायाः पशुवत्कोऽनुमंस्यते ।

— c) Ś1 Ñ1 D1 मवेक्षार्थी; T G °दर्थी. — d) K1.2 समाचरन्; S चरेद्बुधः.

29 a) S सोऽवमत्य. K3.4 Ñ1.3 V1 B3.5.6 Da Dn D2.4.5 तथास्माकम्; K3 च नः सर्वान्; B1 तथा चास्मान्; T2 G1 च नैवास्मान्; G2 च नास्मासु. D1 सोऽवमन्यत तानस्मान्. — b) S अवमत्य (for अना°). — c) K3 B6 (before corr.) Da2 D3 कृतवान्.

30 a) D5 ते; T2 G1-4 तु (for हि). T2 G1-4 सात्वतां मध्ये. — b) K0.2.3 Ñ3 B D (except D1) transp. पदं and कृतं. M5 महत् (for मम). T1 पादं संनिहितं मम; T2 G1-4 कृत (G3 °तः) मोद्घाटकः (G3 °कं) कथं. — After 30ab, T2 G (except G1) ins.:

2062* त्वया चेदाभ्यनुज्ञातो धर्षयिष्यति माधव ।
[ G5.6 मर्षयिष्यामि. ]

— c) Ñ1 न सहिष्यामि; T2 G (except G1) न मर्षयिष्ये.

31 a) T2 G2-4 पूर्ता; M उर्वी (for पृथ्वीः). — b) G1 M °मि न संशयः. — c) Ś1 K (except K3) Ñ1 D2.3.5 अर्जुनेन (Ś1 Ñ1 °नस्य) पराभवः. — After 31, T2 G (except G1) ins.:

2063* तमहं भ्रातृभिः सार्धं निहन्मि कुलपांसनम् ।

— After 31, M1-3 (erroneously) read 1. 213. 4c-5b।

32 Before 32, T G ins. वैशं. — a) S रौहिणेयं गर्जमानं. — b) D2.3 °गंभीर°. — c) Ś1 K2 D3 अन्व°; M5 °वर्तत. — d) Ś1 K2 Ñ2 B3.6 Da Dn3 D4.5 G2.6 तथा; T1 M ततः. T2 G2.4 °वृष्ण्यंधकेश्वराः.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B Da Dn1.n3 D1.3.4.5-T2 G3-5 M3.4 सुभद्राहरण; T1 संभव. — *Adhy. name:* Ś1 K1 वृष्ण्यंधककोपः (K2 °कप्रकोपः); K0.2.4 D1 बलदेवक्रोधः (K0 °क्रोधनः; K3 °कोपः); T2 G3-5 बलभद्रकोपः (G5 °कोपनं); M5 समाक्षोभः. — *Adhy. no.* (figures, words or both): *Dn3 219; Dm 233; D4 170;* T1 229; T2 G1.4-6 M 183; G3 181; G2 184. — *Śloka no.:* Dn 32; M5 63. — *Aggregate śloka no.:* Dn3 7950.

## 213

1 Ś1 K (except K0) D2 S om. उवाच. — a) Ś1 K0.1.4 तदा वाक्यं; K2.3 Ñ3 B1.3 Dn1.n2 D4 T2 G1.4 यथा वीर्यं; B1m 3 D1 M5 यदा वीर्यं; Dn2 यथा वा°; D4 तथा वा°. — b) G1 M1.2 सर्वयादवाः. — d) K4 Ñ1.3 B D (except D1) °संयुतं. Ñ1 वाक्यं धर्मार्थसंहितम्. — After 1, S ins.:

2064* मयोक्तं न श्रुतं पूर्वं सहितैः सर्वयादवैः ।
अतिक्रान्तमतिक्रान्तं न निवर्तेति कर्हिचित् ।
शृणुध्वं सहिताः सर्वे मम वाक्यं सहेतुकम् ।

2 a) K (except K0.1) Da2 D1 सम्मानो. — d) Ñ Dn3 D2.3.4.5 T G2.4 M1-3 °यमसंशयः; Ñ B3.6 Dn1.n2 °यं न संशयः; G1 धर्मसंश्रयः.

3 a) G2.3 अपि धर्मान्. K0.1.4 न वः; K3 अथ Ñ1 स वः; D5 अयं; T2 G (except G1) च वः (for न वः).

4 G1 (hapl.) om. 4-5. M1-3 read 4c-5b after 1. 212. 31; — a) T1 एवं; G1 M इव (for अपि). — b) K2.3 Ñ1.2 V1 B D G1 °मन्यते; T2 G2-4 M1-4 °मंस्यति. Ñ1 पशुवत्कान्न मन्यते. — c) G2.6 तथार्थं पु°.

विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ४
एतान्दोषांश्च कौन्तेयो दृष्टवानिति मे मतिः ।
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥ ५
उचितश्चैव संबन्धः सुभद्रा च यशस्विनी ।
एष चापीदृशः पार्थः प्रसह्य हृतवानिति ॥ ६
भरतस्यान्वये जातं शंतनोश्च महात्मनः ।
कुन्तिभोजात्मजापुत्रं को बुभूषेत नार्जुनम् ॥ ७
न च पश्यामि यः पार्थं विक्रमेण पराजयेत् ।
अपि सर्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ८
स च नाम रथस्तादृङ्मदीयास्ते च वाजिनः ।
योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ॥९
तमनुद्रुत्य सान्त्वेन परमेण धनंजयम् ।
निवर्तयध्वं संहृष्टा ममैषा परमा मतिः ॥ १०
यदि निर्जित्य वः पार्थो बलाद्गच्छेत्स्वकं पुरम् ।
प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ॥ ११
तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप ।
निवृत्तश्चार्जुनस्तत्र विवाहं कृतवांस्ततः ॥ १२
उषित्वा तत्र कौन्तेयः संवत्सरपराः क्षपाः ।
पुष्करेषु ततः शिष्टं कालं वर्तितवान्प्रभुः ।
पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमाविशत् ॥ १३
अभिगम्य स राजानं विनयेन समाहितः ।
अभ्यर्च्य ब्राह्मणान्पार्थो द्रौपदीमभिजग्मिवान् ॥१४
तं द्रौपदी प्रत्युवाच प्रणयात्कुरुनन्दनम् ।
तत्रैव गच्छ कौन्तेय यत्र सा सात्वतात्मजा । C. 1. 7978 B. 1. 221. 17

---

5 G1 om. 5 (cf. v. l. 4). — c) Ñ1 D3 कृतवान्; D5 हरणं; T2 G3.4 बलवान्.

6 Ś1 K1 om. 6. — a) T2 G (except G1) अपि (for एव). — b) Ñ2 B6 D5 सुभद्रां and °स्विनीं. M6.8 om. and M7 has lacuna for च यशस्विनी. — c) K0 B1 D1 एष वा; K4 एषा वा. T2 G (except G1) M8 एतस्याः (M8 एषोपि) सदृशः पार्थः. — d) K0.4 B5 T1 हृतः; T2 G M अतः (for इति).

7 a) K3 B5 T G2-4 जातः. — b) Ñ V1 B D3 Dn शांतनोश्च. Ñ2 Dn D4 यशस्विनः. T1 G1 M शंतनोः पौत्रमद्य वै; T2 G2-4 शत्रुघातं(G2.3 °स)नकृत्तथा; G5.6 शत्रुघातनमद्य वै. — d) K2 T2 G (except G1) M8 क्व (for को). T1 बुभूषेच. Ś1 K1 को नु दूषितवानगुं. G1 corrupt.

8 a) K4 G1 तं (for न). T1 M (except M8) तं (for यः). — b) K2.3 Ñ2.3 B D (except D1.2.5) M8 विजयेत रणे बलात्; M6-8 °ण तु यो जयेत्. — After 8ab, Ñ1.3 B3 Dn D5 ins.:

2065* वर्जयित्वा विरूपाक्षं भगनेत्रहरं हरम् ।

— c) K2.3 लोके सर्वे (by transp.). — d) Ś1 K1 सेंद्ररुद्रवसुष्वपि; K4 सेंद्रैरपि च मा°; Ñ1 सेंद्ररूपेण मानवः; D1.2 सेंद्रैरपि सुरासुरैः; T2 G (except G1) सदेवमनुजेषु च (G5.6 °जेष्वपि).

9 a) M6-8 स च मानी. T2 G2-4 रथस्तावत्. — After 9ab, D4 (marg. sec. m.) S ins.:

2066* मम शस्त्राण्यशेषेण तूणी चाक्षयसायकौ ।

— c) T2 G (except G1) स (for च). — f) Ś1 K (except K1) D2.5 T1 कोर्जुनेन (D5 °नस्य); G2 कोन्यस्तेन.

10 a) B1 G3 तद् (for तम्). K2.3 Ñ2.3 B D T2 G4 अभिद्रुत्य (B6 अतिक्रम्य). — c) K3 Ñ2.3 V1 B D1.n2 D4 नि(Ñ2.3 Dn1.n2 न्य)वर्तयत. S हृष्टाः सर्वे निवर्तध्वं. — d) G1-3.4 (before corr.) °मा गतिः.

11 a) Ś1 K1 नः पार्थो. — b) K0.3.4 D1 युक्तो गच्छेद्; G1 युद्धाद्°. D5 T2 G2-4 स्वयं पुरं. — c) T1 नः; G3 नो (for वो). K4 यशः सर्वं. — d) K3 वः; D1 च (for तु). — After 11, S ins.:

2067* पितृष्वसायाः पुत्रो मे संबन्धं नार्हति द्विषम् ।

12 Before 12, K2.3 T2 G (except G1) ins. वैशं°; D5 वैशं° उ°. — b) S तथा कर्तुं. Ś1 K1.4 Ñ1 V1 D2.5 G1 M5.8 नराधिप (D2.5 °पाः); K0 B6 D3 M8 जनाधिपाः. — After 12ab, K4 (marg. sec. m.) D4 (suppl. fol. sec. m.) S (which latter om. 12c-16d) ins. a passage given in App. I (No. 115). — d) K3 Ñ2.3 V1 B D (except D1.4.5) कृतवान्प्रभुः.

13 S om. 13 (cf. v. l. 12). — a) Ś1 K1 उषितस्तत्र. — After 13ab, N (except Ś1 K1) ins.:

2068* विहृत्य च यथाकामं पूजितो वृष्णिनन्दनैः ।

— c) K3 Ñ2.3 B6 Dn पुष्करे तु. K3 Ñ2 B D ततः शेषं. — e) Ś1 पूर्णे द्वादशवर्षे तु. — f) K3 Ñ1.3 V1 B D (except D1.2.5) °प्रस्थमागतः.

17 सुबद्धस्यापि भारस्य पूर्वबन्धः श्लथायते ॥ १५
तथा बहुविधं कृष्णां विलपन्तीं धनंजयः ।
सान्त्वयामास भूयश्च क्षमयामास चासकृत् ॥ १६
सुभद्रां त्वरमाणश्च रक्तकौशेयवाससम् ।
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः ॥ १७
साधिकं तेन रूपेण शोभमाना यशस्विनी ।
भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना ।
ववन्दे पृथुताम्राक्षी पृथां भद्रा यशस्विनी ॥ १८
ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना ।
ववन्दे द्रौपदीं भद्रा प्रेष्याहमिति चाब्रवीत् ॥ १९
प्रत्युत्थाय च तां कृष्णा स्वसारं माधवस्य ताम् ।
सस्वजे चावदत्प्रीता निःसपत्नोऽस्तु ते पतिः ।
तथैव मुदिता भद्रा तामुवाचैवमस्त्विति ॥ २०
ततस्ते हृष्टमनसः पाण्डवेया महारथाः ।

---

14 Ś1 S om. 14 (cf. v. l. 12). — a) Ñ2 B3 Dn D4 च (for स). — b) Ñ2 B3 Dn1.n3 D4 नियमेन. B4 समंन्वितः. — d) K2 N1 उपजग्मिवान्.

15 S om. 15 (cf. v. l. 12). — a) Ś1 K1 D2.4 विनयात्. Ś1 पांडुनंदनं. — Ś1 K2 om. 15cd. — e) Ñ1 स्वबंधस्यापि. N1.3 V1 भावस्य. — f) K4 Ñ1 Dn3 D2.3 पूर्वो बंधः.

16 S om. 16 (cf. v. l. 12). — d) Ś1 K3 क्षामयामास; V1 कामया°; D1.3 शमया°.

17 a) T2 G3-6 त्वरमाणां. D4 S तु (for च). D1.3 सुभद्रां चानयामास. — b) Ś1 K1-3 Ñ1 पीत-; D3 क्षौम- (for रक्त-). K0.2 D2 M5 (inf. lin. as in text).6-8 वाससीं; K3.4 Ñ V1 B Da Dn D3 T2 G3-6 -वासिनीं° (for -वाससम्). — d) Ñ1 कृत- (for कृत्वा). K3 D4 T2 G गो(G3 गौ)पालिकं वपुः.

18 b) D4 T G4 यमौ कृष्णसहोदरा. — After 18ab, S ins.:

2069* गोपालिकामध्यगता प्रययौ प्रजिनं पुरम् ।
तत: पुरवरश्रेष्ठमिन्द्रप्रस्थं यशस्विनी ।
त्वरिता खाण्डवप्रस्थमाससाद विवेश च ।

G1 om. 18cd. — c) D4 T1 सा गृहद्वार°; T2 G3-6 सा पुरश्रेष्ठ°; G5.6 M6-8 सा गृहश्रेष्ठ°. — d) Ñ1 नवांगना; D4 S (G1 om.) यशस्विनी. — e) Ñ2 पृथिवी साक्षात् (for पृथु°). — f) D4 T G4 पांडवमातरं; G1-3.5.6 M भद्रा पितृष्वसां. — After 18, K4 Ñ2.3 V1 B D (except D1) ins.:

2070* तां कुन्ती चारुसर्वाङ्गीमुपाजिघ्रत मूर्धनि ।
प्रीत्या परमया युक्ता आशीर्भिर्युञ्जतातुलाम् ।

[ (L. 2) K4 °र्युंजती सदा; Ñ3 V1 आशिषोयुंक्त चातुला. ]

19 b) K3 D4 T1 G (except G1.4) °शानना.

20 a) K3 N2.3 B Da Dn D5 सदा; K3 ततः; D4 G3-6 M तु तां (for च तां). D4 T2 G3-6 M देवी (G3 M3.7.8 °वी) (for कृष्णा). T1 गृहीत्वोत्थाप्य तां हस्ते; G1 प्रत्युपस्थाय तां देवी. — b) Ś1 Ñ1 D1.4 ह; K0.1.4 Ñ3 V1 Dn D3 च (for ताम्). D4 S कृष्णा कृष्णसहोदरीं (T1 G3.6 M °रीं). — c) V1 आलिंग्य. D1 चाब्रवीत्; D4 सावदत्; T2 G (except G1) चाभवत्. Ñ2 B Da D3 D2.3 परिष्वज्यावदत् (Da °ज्याब्रवीत्); D5 परिष्वज्य तदा; M3.5 सस्वजानावदत्. K3 Ñ2.3 V1 B Da Dn D4.5 M प्रीत्या; D2 कृष्णा (for प्रीता). — After 20cd, T2 G (except G1) ins.:

2071* वीरसूर्भव भद्रे त्वं भव भर्तृप्रिया तथा ।

T2 G3-6 cont.: D4 (marg. sec. m.) T1 G1 M ins. after 20cd:

2072* ओजसा निर्भृता यद्वीरुवाच परमाशिषः ।

[ D4 T1 M निर्जिता; G1 निर्मिता (for निर्भृता). ]

— f) D4 S तथा (for एवम्). — After 20, D4 (suppl. fol. sec. m.) S ins. a passage given in App. (No. 116).

21 D4 orig. reads 21 as in text, suppl. fol. sec. m. as in S. — b) D4 (suppl. fol.) पांडवाश्च महा°. — For 21cd, D4 (suppl. fol.) S subst.:

2073* युधिष्ठिरमुखाः प्रीता बभूवुर्जनमेजय ।
कुन्ती च परमप्रीता कृष्णा च सततं तथा ।,

followed by a colophon (adhy. no.: D4 suppl. fol. 235; T1 230; T2 G3-6 M 185; G1 184; G2 183; G4 186). — D4 (suppl. fol. sec. m.) cont.:

वैशंपायनः ।

2074* अथ शुभाय निर्वृत्ते वृष्णीनां परमोत्सवे ।
अर्जुनेन हृतां भद्रां चाहुश्चक्रगदाधरः ।
पुरस्तादेव पौराणां संशयः समजायत ।
जानता वासुदेवेन चालितो भरतर्षभः ।
लोकस्य विदितं ह्येतद् पूर्वं विश्रुता यथा ।
सान्त्वयित्वाभ्यनुज्ञातो भद्रया सह संगतः ।
दित्सता सोदरां तस्मै पत्रप्रियस्केतुना ।
अर्हते पुरुषेन्द्राय पार्थायायतलोचनाम् ।

न्ती च परमप्रीता बभूव जनमेजय ॥ २१
श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वपुरोत्तमम् ।
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तदा ॥ २२
आजगाम विशुद्धात्मा सह रामेण केशवः ।
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ॥ २३
भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ।
सैन्येन महता शौरिरभिगुप्तः परंतपः ॥ २४
तत्र दानपतिर्धीमानाजगाम महायशाः ।
अक्रूरो वृष्णिवीराणां सेनापतिररिंदमः ॥ २५
अनाधृष्टिर्महातेजा उद्धवश्च महायशाः ।
साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महायशाः ॥ २६
सत्यकः सात्यकिश्चैव कृतवर्मा च सात्वतः ।
प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च ॥ २७
चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च ।
सारणश्च महाबाहुर्गदश्च विदुषां वरः ॥ २८
एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा ।
आजग्मुः खाण्डवप्रस्थमादाय हरणं बहु ॥ २९
ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतम् ।
प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा ॥ ३०
ताभ्यां प्रतिगृहीतं तद्वृष्णिचक्रं समृद्धिमत् । C. 1. 7905 B. 1. 221. 2 K. 1. 247. 2

---

सत्कृत्य पाण्डवश्रेष्ठं प्रेषयामास चार्जुनम् ।
भद्रया सह बीभत्सुः प्रापितो वज्रिणः पुरम् ।

22 D4 reads 22 orig. as in text; the readings of the suppl. fol. are shown below. — a) Ś1 K (except K2) Ñ1 Dn3 D1.2.6 ज्ञात्वा तु; D4 (suppl. fol.) ततस्तु; T1 ततः स. — b) K0.4 Ñ2.3 B1.2 Dn1.n2 D2.6 स्वं; K1 सु- (for स्व-). N1 V1 समासं पुरुषोत्तमं; D4 (suppl. fol.) संप्रतस्थे पुरोत्तमं; T1 संप्रतीयात्पुरो°. — c) D4 T1 पुरुषश्रेष्ठं. — d) G (except G1.4) तथा. — After 22, D4 (suppl. fol. sec. m.) S ins.:

2075* यियासुः खाण्डवप्रस्थमामन्त्रयत केशवः ।
पूर्वं सत्कृत्य राजानमाहुकं मधुसूदनः ।
राजा विपृथुरक्रूरः संकर्षणविडूरथौ ।
पित्रा च पुरुपेन्द्रेण पुरस्तादभिमानितः ।
संप्रीतः प्रीयमाणेन वृष्णिराज्ञा जनार्दनः । [5]
अभिमन्त्र्याभ्यनुज्ञातो योजयामास वाहिनीम् ।
ततस्तु यानान्यासाद्य दाशार्हपुरवासिनाम् ।
सिंहनादः प्रहृष्टानां क्षणेन समपद्यत ।
योजयन्तः सदश्वांश्च यानयुग्यं रथांस्तथा ।
गजांश्च परमप्रीताः समपद्यन्त वृष्णयः । [10]

[ (L. 3) M (except M5) तथा (for राजा). D4 T1 संकर्षणभयेन ते; G3 M1 °गदोद्भवाः; M5.6–8 °भये सखौ. — (L. 4) D4 T1 G6 M पिता च (M4 पितेव). T2 G2–4 °दनुमोदितः; G5.6 °दनमानितः. — (L. 5) T2 G2–4 स प्रीतः. G1.5.6 वृष्णिराजा. — (L. 6) G1 ततस्तु यादवैः सार्धं. ]

23 S om. 23ab. — b) K2 Da रामेण सह (by transp.) — c) Ś1 K3.4 D1 G1 °सहामात्यैः; K0 D2.4.6 G2 °महामात्यैः; K2 °महार्थैहैः. — d) K2 B6 Da महावीरै(K2 °र्यै)र्; T2 स हि वीरैर्; G2–4 सिंहवीरैर्.

24 b) Ñ2 B6 Dn D1.6 बहुभिर्वृतः; D2 सहस्रौ वृ°.

25 a) G5.6 दानपरः. T1 G (except G5.6) M5 श्रीमान्. Ñ1 सत्योदारमतिर्धीमान्. — b) T1 G1 M जगाम स (T1 G1 M7 सु-) महा°.

26 a) Ś1 K (except K0) D1 अनावृष्टिर्; T1 °धृतिर्; T2 G2–4 °धृष्यो; G5.6 °धृष्णिर्. — K2 (hapl.) om. 26cd. — d) K3 Da2 महात्मनः; K4 Ñ B Da1 Dn D1.4 T1 G1 M महामनाः.

27 ab) T2 G (except G1) सात्यकिश्च महाबाहुः कृतवर्मा महारथः. — c) K3 B (except B6) Dn1.n2 D2 शांबश्च. — d) Ś1 K1 निषधः; T2 G (except G1) निः(G2.3 नि)शंकुः (cf. v. l. 1. 211. 10c).

28 K3 (hapl.) om. 28ab. — a) Ś1 K1 दली; K0 B6 T G झल्ली; N2 जल्लिर्; V1 मंदी; D1 पृथुर्; D4 शिनिर् (for झिल्ली). K4 च पृथुरे°. M5 यल्लली पृथुरे° (sic). — c) G2.5.6 महातेजा.

29 b) D1 भोजवृष्ण्यंधकास्; D2 वृष्णयश्चांधकास्. K2 B6 Da D2 तदा. — d) D2 भरणं प्रति; D4 द्रविणं बहु. Cd cites हरणं. — After 29, D4 (marg. sec. m.) S ins.:

2076* अन्वाहारं समादाय पृथग्वृष्णिपुरोगमाः ।
प्रययुः सिंहनादेन सुभद्रामवलोककाः ।
ते त्वदीर्घेण कालेन कृष्णेन सह यादवाः ।
पुरमासाद्य पार्थानां परां प्रीतिमवाप्नुवन् ।

[ (L. 1) D4 T2 G2–4 उपहारं. — (L. 2) T2 G2–4 अवलोकितुं. — (L. 3) T1 अदीर्घेणैव कालेन. ]

30 ab) K0 D2 श्रुत्वा राजा (by transp.). — d) Ś1 K1 यानं (for यमौ). Ś1 K2–4 Da D1 T1 G (except G3.4) M6–8 प्रस्थापयत्. T2 G (except G1) गृहाद्.

31 a) K3 Ñ2.3 V1 B D T2 G तु (G1 तं) (for तद्).

33/22 विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् ॥ ३१
सिक्तसंमृष्टपन्थानं पुष्पप्रकरशोभितम् ।
चन्दनस्य रसैः शीतैः पुण्यगन्धैर्निषेवितम् ॥ ३२
दह्यतागुरुणा चैव देशे देशे सुगन्धिना ।
सुसंमृष्टजनाकीर्णं वणिग्भिरुपशोभितम् ॥ ३३
प्रतिपेदे महाबाहुः सह रामेण केशवः ।
वृष्ण्यन्धकमहाभोजैः संवृतः पुरुषोत्तमः ॥ ३४
संपूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः ।
विवेश भवनं राज्ञः पुरंदरगृहोपमम् ॥ ३५
युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि ।
मूर्ध्नि केशवमाघ्राय पर्यष्वजत बाहुना ॥ ३६
तं प्रीयमाणं कृष्णस्तु विनयेनाभ्यपूजयत् ।
भीमं च पुरुषव्याघ्रं विधिवत्प्रत्यपूजयत् ॥ ३७
तांश्च वृष्ण्यन्धकश्रेष्ठान्धर्मराजो युधिष्ठिरः ।
प्रतिजग्राह सत्कारैर्यथाविधि यथोपगम् ॥ ३८
गुरुवत्पूजयामास कांश्चित्कांश्चिद्वयस्यवत् ।
कांश्चिदभ्यवदत्प्रेम्णा कैश्चिदप्यभिवादितः ॥ ३९
ततो ददौ वासुदेवो जन्यार्थे धनमुत्तमम् ।
हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ॥ ४०
रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम् ।

— [b]) K2.3 N2.3 B D (except D1.2.5) T2 G1–4 M3 महर्धिमत्. — D1 om. 31[c]–32[a].

32 D1 om. 32 (cf. v. l. 31); T2 G2–4 (hapl.) om. 32[ab]. — [a]) K3 संमृष्टसंसिक्तपथं; Ñ2.3 V1 B (except B6) Dn1.n2 D4 संमृष्टसिक्त° (by transp.). — [b]) B3 °शोभनं; T1 °वासितं; M3 °भूषितं. — [c]) T1 सुचंदनरसैः.

33 [a]) Ś1 दहता. Some MSS. (mostly S) अगरुणा. K0.4 दह्यमानेनागु(K4 °ग)रुणा. — [b]) T2 G (except G1) सुगंधितं (G5.6 °नं). — After 33[ab], Ś1 K (except K2) Ñ1.3 V1 D2.5 ins.:

2077* गन्धोद्दाममिवाकाशं बभूव जनमेजय ।
[ Ś1 गंधोद्दिग्धम्; K1 गंधोद्दिष्टम्; D5 गंधादानम्. ]

— [c]) Ś1 K1 असंसृष्ट°; K3 Ñ3.3 B D T2 G3.4 हृष्टपु(B1m °तु)ष्ट° (D3 सुविसृष्ट°); T1 ससमृद्ध°.

34 [a]) Ś1 K0.1.4 N1 D2.5 रामेण सह (by transp.). — [c]) K2 Ñ2.3 V1 B Dn D3.4 °कैस्तथा भोजैः; Da °कस्तथा भोजैः; T2 G2–4 °कैर्महाबाहुः. — [d]) K2.3 Ñ1.3 B D (except D1.3.6) समेतः.

35 [a]) Ś1 K0.1.4 G3.5.6 तु; D5 तैः (for च). — [b]) Ś1 तु (for च). V1 °णैश्चैव सर्वशः.

36 [b]) Ś1 K (except K2) N1 D1.2 °गम्य यथा°. — [d]) K2.3 Ñ3.3 B D (except D3) T1 बाहुभ्यां परिषस्वजे; T2 G (except G5.6) परिष्वज्य च बा°; M6–8 परिष्वजत बा°.

37 [a]) K3–4 N V1 B D T1 M प्रीयमाणः; G1 पूजयानः. K2 गोविंदं; K3 N B Da Dn D4.6 गोविंदो; D2 कृष्णस्य. — [c]) Ś1 K (except K2) D2 विजयं प्रत्य(D2 पर्य)पूजयत्. — K1 N1.3 D1 (hapl.) om. 37[cd]. — [d]) Ś1 पर्यपूजयत्; G1 प्रतिपूज°.

38 [a]) K0.3.4 भोजवृ°. — [b]) K3 N2.3 B D (except D1.3.5) कुंतीपुत्रो युधि°. — [c]) Ś1 K1 प्रीतिं ज°. — [d]) K2.3 Ñ2.3 V1 B Da Dn D4.5 यथाग(Da1 °म)तं; K1 D1.3 T G (except G1) यथोचितं; Ñ1 यथावयः.

39 [a]) T1 विधिवत्पूज°. — [c]) K1 अभ्यद्रवत्; T2 G (except G1) चाभ्यवदत्. T1 G1.2 M प्रीतः (for प्रेम्णा). — [d]) K0 चाप्यभिवादितः; K3.4 चाप्यभि°; N1.3 °भिवंदितः. — After 39, D4 (marg. *sec. m.*) S ins.:

2078* ततः पृथा च पार्थाश्च मुदिताः कृष्णया सह ।
पुण्डरीकाक्षमासाद्य बभूवुर्मुदितेन्द्रियाः ।
हर्षादभिगतौ दृष्ट्वा संकर्षणजनार्दनौ ।
बन्धुमन्तं पृथा पार्थं युधिष्ठिरममन्यत ।
ततः संकर्षणाक्रूरावप्रमेयावदीनवत् ।
भद्रवत्यै सुभद्रायै धनौघमुपजह्रतुः ।
प्रवालानि च वस्त्राणि भूषणानि सहस्रशः ।
कुथास्तरपरिस्तोमान्व्याघ्राजिनपुरस्कृतान् ।
विविधैश्चैव रत्नौघैर्दीप्तप्रभमजायत ।
शयनासनयानैश्च युधिष्ठिरनिवेशनम् ।
ततः प्रीतिकरो यूनां विवाहपरमोत्सवः ।
भद्रवत्यै सुभद्रायै सहस्राग्रमवर्तत ।

[ (L. 1) *D4 T2 G3–6* सहिताः (for मुदिताः). — (L. 5) M8.5 अभीतवत् (for अदीन°). — (L. 7) T1 G1.3 हाराणि; M वज्राणि (for वस्त्राणि). — (L. 8) M व्यालाजिनपुर°. — (L. 9) T2 G3–6 तथाभरणरत्नौघैः. M3 विविधानि च रत्नानि दीप्तमत्यमजायत. — (L. 11) M3 नृणां (for यूनां). ]

40 [a]) K2 Ñ2.3 B (except B6) D (except D1) तेषां (for ततो). K2.3 N2.3 B D (except D3) हृषीकेशो (for वासु°). — [b]) Ś1 K1 N3 जन्यार्थं; K3 V1 D1.4 (by corr.) G2 कन्यार्थे (K3 °र्थं). K4 वरस्नेहार्थमुत्तमं. — [c]) K0.3.4 D5 च (for वै). Ś1 K (except K2) सुभद्रायै.

41 [a]) D2 G1 M7 कांचनानां च. — [b]) Ś1 K1

चतुर्युजामुपेतानां सूतैः कुशलसंमतैः ।
सहस्रं प्रददौ कृष्णो गवामयुतमेव च ॥ ४१
श्रीमान्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ।
वडवानां च शुभ्राणां चन्द्रांशुसमवर्चसाम् ।
ददौ जनार्दनः प्रीत्या सहस्रं हेमभूषणम् ॥ ४२
तथैवाश्वतरीणां च दान्तानां वातरंहसाम् ।
शतान्यञ्जनकेशीनां श्वेतानां पञ्च पञ्च च ॥ ४३

स्नापनोत्सादने चैव सुयुक्तं वयसान्वितम् ।
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ॥ ४४
सुवर्णशतकण्ठीनामरोगाणां सुवाससाम् ।
परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ॥ ४५
कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः ।
मनुष्यभारान्दाशार्हो ददौ दश जनार्दनः ॥ ४६
गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम् । C. 1. 8013 B. 1. 221. K. 1. 247.

---

°शोभिनां. — $^{c}$) Ś1 K1 चतुर्युजैरुपे°; B6 हस्त्यारोहैरुपे°. — $^{d}$) K2 Ñ2.3 B D (except D4.5) G1 कुशलशिक्षितैः; T1 परमसंमतैः. — After $41^{cd}$, T1 ins.:

2079* बाह्लीकसिन्धुजातानां काम्बोजानां शतं शतम् ।
हरणार्थं ददौ कृष्णस्तुरगाणां जनेश्वर ।

— $^{f}$) S नियुतम् (for अयुतम्).

42 $^{a}$) D2 उपाहृतान्यदे°; T1 M6-8 शुक्लवर्णसवत्सानां (T1 °सुवर्णानां); T2 G2-4 उपावृत्य (G2 °वर्त्य; G3 °कृत्य) सहस्राणां; G1 शुद्धानां तु सुवंश्यानां; G5.6 M3.5 उपपाद्य (M3 शुक्लवर्ष्स; M5 *inf. lin.* उपावर्त्य) तु वश्यानां. — $^{b}$) Ñ1 श्वेतानां पुण्य°. — After $42^{ab}$, Ś1 K1 D2.5 ins.:

2080* ददौ पार्थाय शुद्धात्मा सहस्राण्येकविंशतिम् ।

D5 cont.: Ś1 K1-3 (all om. line 2) Ñ1.2 V1 D2 ins. after 42:

2081* गजानां नित्यमत्तानां सादिभिः समधिष्ठिताम् ।
मेघाभानां ददौ कृष्णः सहस्रमसितेक्षणः ।

— After $42^{ab}$, S reads 47–48. B3 (hapl.) om. $42^{cd}$; M3 om. $42^{cdef}$. — $^{c}$) Ś1 K1 विशुद्धानां; K0.4 सुशुभ्राणां; K2 Ñ2.3 B1.6 D (except D1.2) च शुद्धानां. — $^{d}$) M3 °समतेजसां. — $^{f}$) K2 Ñ2 B6 D (except D4.5) °भूषितं; K3 °भूषिणां; S (M6 om.) °मालिनां. — After 42, Ś1 K1-3 (all om. line 2) Ñ1.2 V1 D2 ins. 2081*; while S ins.:

2082* काम्बोजारट्टबाह्लीकसिन्धुजातांश्च भारत ।
सुवर्णकृतसंनाहान्घण्टानादविनादितान् ।
श्वेतचामरसंछन्नान्सर्वशङ्खैरलंकृतान् ।
जात्यश्वानां सहस्राणि पञ्चाशत्प्रददौ तदा ।

T1 G1 cont.:

2083* हयानां चन्द्रसंकाशं श्यामकर्णान्ददौ शतम् ।

43 $^{a}$) D2 गजानां नित्यमत्तानां (=prior half of line 1 of 2081*). — $^{b}$) K0.4 दांतानां च सुवर्चसां. — $^{c}$) S (except G3) °केशानां. — $^{d}$) Ś1 K1 सुता°; T2 G3.4 शता° (for श्वेता°). — After 43, S (except T1 M3) ins.:

2084* शिबिकानां सहस्रं च प्रददौ मधुसूदनः ।

T2 G2 (om. line 2).3-6 cont.:

2085* प्राच्यानां च प्रतीच्यानां वाह्लीकानां जनार्दनः ।
ददौ शतसहस्रं वै कन्याधनमनुत्तमम् ।

[ (L. 1) G3 कृष्णानामपि चाश्वानां (for prior half). ]

44 T1 om. $44^{a}$–$45^{b}$. — $^{a}$) K0.3 D5 T2 G2-6 M3.5 स्ना(T2 G3.4 स्न)पनाच्छादने; K4 स्नापनोद्वर्तने; B (B3 marg.) स्नानपा(B3 orig. °दा)नोत्सवे; D2 स्नानपानोदनैश्च. G2 सर्वकर्मणि निष्णातं (cf. 2086*). Cd cites उत्सादनं. — After $44^{a}$, T2 G3-6 ins.:

2086* भोजने पाचने तथा ।
आधानोद्वासने चैव प्रेरणे यत्र यत्र च ।
अनुलेपे च गन्धानां पेषणे च विचक्षणम् ।
सर्वकर्मणि निष्णातं.

— $^{b}$) K3 V1 D2 संयुक्तं; Ñ2 B3 Da Dn D5 प्रयुक्तं; S (T1 om.) युक्तं च. — K2 (? hapl.) om. $44^{d}$–$45^{c}$. — $^{d}$) Ś1 K1 B D1 सुवेशानां; T2 G2-4 सुवेणीनां; M3 सर्वेषां तु.

45 K3 om. $45^{abc}$ (cf. v. l. 44); D2 T G1-3 om. $45^{ab}$. — $^{a}$) Ñ3 B (except B3) Da सुवर्णनिष्क°; G5.6 °कीर्णानां; M3 °कर्णानां. — $^{b}$) Ñ3 B3.5 Dn D5 अरोमाणां. K0.4 G1 सुवर्चसां; K3 N2.3 V1 B D (D2 om.) G5.6 स्वलंकृतां (K2 B1.3.6 Da3 D1 °तं). — After 45, N ins.:

2087* पृष्ठ्यानामपि चाश्वानां बाह्लिजानां जनार्दनः ।
ददौ शतसहस्राख्यं कन्याधनमनुत्तमम् ।

[ (L. 1) Ś1 कृष्णानाम्; K2 पृथूनाम्; Ñ1 V1 D1.3.5 पुष्टानाम्; B3 श्रेष्ठानाम्; Cd पृष्ठ्यानाम् (as above). K0.2.3 Ñ D (except Da) बाह्लिकानां. — (L. 2) K3 Da °सहस्राक्षं; N3 B3.6 D4.5 °सहस्राणि. Line 2 = line 2 of 2085*.

46 K0.3 om. 46. — $^{b}$) K2 Ñ3 B3.6 S °स्य सुवर्चसः. — $^{c}$) K2 अतुल्यभारान्; T2 G1-4 महार्हभा°; M3 हिरण्यभा°; M6-8 मनुष्यसारान्. — $^{d}$) S प्रददौ प्रयुतं तदा. — After 46, S (T1 M om. line 5) ins.:

2088* भूषणानां तु मुख्यानां शतभारं ददौ धनम् ।

53 40 गिरिकूटनिकाशानां समरेष्वनिवर्तिनाम् ॥ ४७
क्लृप्तानां पट्टघण्टानां वराणां हेममालिनाम् ।
हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः ॥ ४८
रामः पाद्ग्राहणिकं ददौ पार्थाय लाङ्गली ।
प्रीयमाणो हलधरः संबन्धप्रीतिमावहन् ॥ ४९
स महाधनरत्नौघो वस्त्रकम्बलफेनवान् ।
महागजमहाग्राहः पताकाशैवलाकुलः ॥ ५०
पाण्डुसागरमाविद्धः प्रविवेश महानदः ।
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ॥ ५१
प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः ।
पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान् ॥ ५२
ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः ।
विजह्रुरमरावासे नराः सुकृतिनो यथा ॥ ५३
तत्र तत्र महापानैरुत्कृष्टतलनादितैः ।
यथायोगं यथाप्रीति विजह्रुः कुरुवृष्णयः ॥ ५४
एवमुत्तमवीर्यास्ते विहृत्य दिवसान्बहून् ।

---

मुक्ताहाराणि शुभ्राणि शतसंख्यानि केशवः ।
प्रवालानां सहस्रं च तथान्यानपि भारत ।
सुवर्णपादपीठानां महार्हास्तरणांस्तथा ।
पर्यङ्काणां सहस्रं च ददौ कन्याधनं तदा ।

[ (L. 3) T G3–6 तथा वै शयनासनान्. — (L. 4) M7.8 °पीठं च महार्घास्तरणास्तृतं. ]

47 S reads 47–48 after $42^{ab}$. — a) N1 विभिन्नानां. — b) Ś1 K0.1.3 D5 °प्रकाशानां. — After 47, S ins.:

2089* सुवर्णकक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ।

48 For S cf. v. l. 47. — a) Ñ3 V1 ह(V1 क्लृ)प्तानां बद्धघंटानां; D1 क्षिप्तानां पंचघं°; D5 कृष्णानां पट्टघ°; T1 द्विपानां स्वर्णघं°; T2 G (except G5) M6–8 क्लृप्तानां पर(M6–8 वर)घंटानां (T2 G3.4 °पादानां; G1 °वर्णानां; G2 °वादानां). Cd cites क्लृप्तानां. — b) K3 Ñ2.3 V1 B D चारूणां (D2 क्लृप्तानां); M6–8 करिणां. — M4 om. $48^{cd}$. — c) Ś1 K0.1.4 Ñ1 D3.5 सादिभिः समुपेतानां. Cd cites सादिभिः. — d) Ś1 साहसप्रिय; B6 Da M (M5 om.) साहसप्रियं; T G (except G1) सहसा प्रियं. — K4 D4 (marg. sec. m.) ins. after 48; D6 (om. line 1), after 49:

2090* स्थितानां बद्धघण्टानां गतानां गोचरं भुवः ।
मद्विषीणामदाद्भूरिपयसामयुतद्वयम् ।;

while S ins. after 48:

2091* प्रददौ वासुदेवस्तु वसुदेवाज्ञया तदा ।

49 a) N (K2 marg.) T2 G3–6 पाणिग्र(K1.2m °ग्रा)हणिकं; G1 पदग्र°; M पादा(M8.5 °द)ग्रहानीकं; Cd पादग्रहणकं. T1 ददौ रामः संनहनं (see below); G2 काम्यरूपगुणैर्युक्तं. — b) V1 पार्थस्य. T1 पार्थाय जनमेजय (see above). — d) K0.2.4 Ñ V1 B D T2 G3–6 M6–8 संबंधं; K3 M5 संबंधः; G1 संबंधात् (for संबन्ध-). K0.2.4 N2 V1 B D1.5 प्रति(D1 परि)पादयन्; K3 प्रीतिमानयन्; N1 प्रत्यमानयत्; N3 Da प्रतिपालयन्; Dn D2.4 प्रतिमानयन्; T1 G1 M प्रीतमानसः; T2 G3–6 प्रेम काम(G3 कार)वत् (for -प्रीतिमावहन्). — After 49, D5 ins. line 2 of 2090*.

50 a) B5 Da स (B5 सु-) महान्धन°. — c) S महारथगजग्राहः. — d) T1 M6–8 जात्यश्वः; T2 G3–6 महाश्वैः; G1 M5.8 जात्यश्वैः (for पताका-).

51 a) K3 S °सागरमाविद्धं; Ñ1 °सागर आविद्धः. Cd cites आविद्धं. — b) Ś1 K Ñ V1 Dn D1.5 M1.7.8 महाधनः; B1(m as in text).5.6m D1.2 G1 °धनं; M5 °बलः (inf. lin. °धनः). — c) T G (except G1) °पूरयन्तेषां. — d) T2 G (except G1) अभीष्टं (G5 °ष्ट) सर्वभोगवत्.

52 a) Ś1 K2 Ñ2 °ह सं चापि. — After $52^{a}$, D4 (marg. sec. m.) ins.:

2092* बलदेवस्ततो मधु ।
दिवारात्रं च सततं सानुजैरधिकं मधु ।
द्राक्षाप्रभवमत्यन्तं कापिशायनमेव च ।
दिव्यमाक्षिकसंमिश्रमासवं च मनोरमम् ।
पद्मरागेन्द्रनीलादिभाजनेषु व्यवस्थितम् ।
रौप्यसौवर्णमुख्येषु चषकेषु पपुः सुराम् ।
पाण्डवोऽपि च धर्मात्मा-

— b) S धनौघं वै (T1 तं) युधि°. — c) Ś1 K1.4 N2 D1.3 तांश्चापि; K0 D5 तान्सर्वान्; T1 तत्सर्वं.

53 a) Ś1 K1 इत्युपेत्य म°. — K3 repeats $53^{cd}$ after $56^{ab}$.

54 ab) = 1. 201. $31^{ab}$. — a) Ś1 K1 N3 V1 B D3 D5 T1 °यानैः; Dn D1.2.4 °नादैः (for °पानैः). — After $54^{a}$, S ins.:

2093* आसवैश्च महाधनैः ।
पीत्वा पीत्वा तु मैरेयान्

[ (L. 1) G1 M5.6–8 महारसैः. — (L. 2) T1 G1 मैरेयम् ] — b) T1 G1 M (except M5) °तलताडिताः; Cd as in

सर्वास्वेषु परं वीरः प्रकर्षमगमद्बली ॥ ३१
सद्यो हि गर्भं राक्षस्यो लभन्ते प्रसवन्ति च ।
कामरूपधराश्चैव भवन्ति बहुरूपिणः ॥ ३२
प्रणम्य विकचः पादावगृह्णात्स पितुस्तदा ।
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ॥ ३३
घटभासोत्कच इति मातरं सोऽभ्यभाषत ।
अभवत्तेन नामास्य घटोत्कच इति स ह ॥ ३४
अनुरक्तश्च तानासीत्पाण्डवान्स घटोत्कचः ।
तेषां च दयितो नित्यमात्मभूतो बभूव सः ॥ ३५
संवाससमयो जीर्ण इत्यभाषत तं ततः ।

प्रकाम (for प्रकर्षं) G1 अभवद् K3 M वशी (for बली)

32 a) Ñ1 2 V1 B (except B3) Dn D1 2 गर्भान् Ś1 K Ñ3 D5 राक्षसा (K3 D5 °सी) गर्भं (for गर्भं राक्ष°) G1 3 सद्यो गर्भान् (G3 गर्भां) हि रा° — b) T1 विसवति K4 प्रमुचति च कामत ; Ñ3 लभति प्रसवति च, G1 2 सूयत सद्य एव हि — c) G1 2 सद्यो (for चैव) — d) Ñ1 2 V1 B D (except D5) °रूपिका

33 a) G2 प्रविश्य D1 स पितु , Cd विकच (as in text) — b) Ś1 अनुगृह्णात्, Ñ1 अगृह्णन्स, G3 स गृह्णन्स, M उपागृह्णात् — d) N1 नाम प्रचक्र°.

34 a) Ś1 K Ñ V1 B Da Dn D1 3 4 घटो हास्यो (Ś1 K0 3 °सो) °कच, B1m Arjp Devp घटभापोत्कच, D5 घटाभहासोत्कच, T1 G3 6 घटेहमुत्कचोस्मि, T2 G1 2 4 5 M8 (inf lin) घटोहमुत्कचोस्मि, M घटोह (M5 हिं) स्यात्कच, Arjp घटोभासोत्कच, B3m Cd as in text ❀ Arj शेषपाठद्वय देवबोधपदिनीसमतमिति । ❀ — b) Ñ1 3 °र तस्य भारत, N2 V1 B D (except D5) माता त प्रत्यभा°, M5 माता त तत्र भा°, M6 8 °र तत्र भा° — c) K1 Da S अभवत् (as in text), the rest अब्रवीत्

35 Ś1 om $35^{ab}$ — a) Ñ1 3 T1 M5 तेनासीत्, T2 G5 तेन स्म, G6 तेनासिन् Cd cites तान् (as in text) — b) G6 °वा सघटोत्कचा — After $35^{ab}$, G1 2 4 ins

1568* विकीर्णकेशो घटते पित्रोरग्रे यतस्तत ।
सुरत पाण्डवाना च तेन चासौ घटोत्कच ।

— c) Ś1 तथा (for तेषा) — d) K0 D5 M5 6 °तुल्यो, K3 °रूपो, V1 Dn D1 °नित्यो (for °भूतो) K2 4 V1 B1 6 Dn D1 5 T G ह (for स ) — S ins after 35 Ñ V1 Dn3 (om lines 8 9) n3 D2 4 5 after 36

1569* घटोत्कचो महाकाय पाण्डवान्पृथया सह ।
अभिवाद्य यथान्यायमब्रवीच्च प्रभाष्य तान् ।
किं करोम्यहमार्याणा नि शङ्क वदतानघा ।
त ब्रुवन्त भैमसेनिं कुन्ती वचनमब्रवीत् ।
त्व कुरूणा कुले जात साक्षाद्भीमसमो ह्यसि । [5]
ज्येष्ठ पुत्रोऽसि पञ्चाना साहाय्य कुरु पुत्रक ।
वैशपायन ।
पृथयाप्येवमुक्तस्तु प्रणम्येद वचोऽब्रवीत् ।
यथा हि रावणो लोके इन्द्रजिद्वा महाबल ।
वर्ष्मवीर्यसमो लोके विशिष्टश्चाभव नृषु ।

[ Before line 1, M6–8 ins वैश° — (L 1) G3 M5 महाबाहु (for °काय ) Ñ1 D1 दृष्टवान् (for पाण्ड°) — (L 2) D5 S प्रसाद्य (for प्रभा°) Ñ V1 Dn3 ता (for तान्) — Before line 3, S (except M5 6) ins घटोत्कच — (L 3) Ñ1 °करोमीह कार्यं°, T1 G1–3, 6 °करोम्यह°, M °करोहमिहार्यं° D5 T2 G4–6 M5 8 नि शका, T1 न शका — (L 4) T2 G1 2 5 इति ब्रुवत भै°; G3 इति ब्रुवत त भैम T2 G4–6 तत कुती वचोब्र°, G1 3 तत कुतीदम° — Before line 5, D4 (marg ) ins कुन्त्युवाच, T M5 6 कुती — (L 5) T2 G1 5 भीमसुतो M बले (for ह्यसि) — (L 6) D1 T1 G3 6 M5 8 तु (for असि) Dn3 T2 G4 6 M6–8 ज्येष्ठपुत्रस्तु, G1 2 त्व ज्येष्ठपुत्र Ñ1 Dn3 n3 D2 4 5 T1 G3 सहाय्य M5, 8 पौत्रक. — Ñ1 Dn2 M5 8 om वैश° Ñ2 3 V1 Dn3 D4 वैश° उ° — (L 7) T G4–6 M6–8 °श्चेव° V1 M5 6 8 एव, Dn2 च, Dn3 T2 G4–6 M7 एव (for इद) D4 प्रणम्य वचसोब्र°. — (L. 8) D2 M5 5 वा (for हि) Ñ1 V1 D1 च (for वा) — (L 9) D5 T2 G3 6 M तेषा; T1 G1 2 तयोर् (for वर्ष्म ) D5 S वीर्ये (for लोके) D2 वर्ष्मतो वीर्यतस्ताभ्यां D1 विशिष्टो वा समोपि वा, M °ष्टोह भवेन्नृ° ]
— Thereafter S reads 37–38

36 Before 36, S ins भीम — a) S (except M5 6) सहवासो (G3 सवासोय) मया जी° — b) K (except K1) N1 3 ता (for त) D5 तदा Ñ2 V1 B Da Dn D1, 2 4 इत्याभाष्य ततस्तु तान्, S त्वया कमलपालिके — After $36^{ab}$, S (M om lines 2–4) ins

1570* पुनर्द्रक्ष्यसि राज्यस्थानित्यभाषत तां तदा ।
हिडिम्बा ।
यदा मे त्व स्मरे कान्त रिरसू रहसि प्रभो ।
तदा तव वश भूय आगन्तास्म्याशु भारत ।
इत्युक्त्वा सा जगामाशु भावमासज्य पाण्डवे ।

[ (L 2) G1 2 °दा मा सस्मरे — (L 3) G4 आगमिष्यामि ]
— c) T1 G (except G3 4) M5 6 स्मृत्वा (for कृत्वा) — d) K1 Da Dn1, n3 प्रतिप° — After 36, S ins

1571* ततस्तु पाण्डवा सर्वे शालिहोत्राश्रमे तदा ।

हिडिम्बा समयं कृत्वा स्वां गतिं प्रत्यपद्यत ॥ ३६
कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कचः ।
आमन्त्र्य राक्षसश्रेष्ठः प्रतस्थे चोत्तरां दिशम् ॥ ३७
स हि सृष्टो मघवता शक्तिहेतोर्महात्मना ।
कर्णस्याप्रतिवीर्यस्य विनाशाय महात्मनः ॥ ३८

इति श्रीमहाभारते आदिपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

## १४४

वैशंपायन उवाच ।
ते वनेन वनं वीरा घ्नन्तो मृगगणान्बहून् ।
अपक्रम्य ययू राजंस्त्वरमाणा महारथाः ॥ १
मत्स्यांस्त्रिगर्तान्पाञ्चालान्कीचकानन्तरेण च ।
रमणीयान्वनोद्देशान्प्रेक्षमाणाः सरांसि च ॥ २
जटाः कृत्वात्मनः सर्वे वल्कलाजिनवाससः ।
सह कुन्त्या महात्मानो बिभ्रतस्तापसं वपुः ॥ ३
क्वचिद्वहन्तो जननीं त्वरमाणा महारथाः ।
क्वचिच्छन्देन गच्छन्तस्ते जग्मुः प्रसभं पुनः ॥ ४
ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः । C. 1. 6087 B. 1. 150. 5 K. 1. 170. 3

---

पूजितास्तेन वन्येन तमामन्त्र्य महामुनिम् ।
[ (L. 1) T1 G1.2 ते (for तु). — (L. 2) M3.5 वाक्येन. M आमंत्र्य च (for तमा°). M5 महामतं. ]

37 S reads 37–38 after 1569* (cf. v. l. 35). — After 37$^{a}$, G1.2.4 ins.:

1572* भवत्स्मरणमात्रतः ।
महत्कृच्छ्रे घने दुर्गे.

— $^{c}$) Ś1 K0.3 D5 T G M3.5 राक्षस- (as in text); the rest रक्षसां. — $^{d}$) Ñ3 ह; G3 स (for च). K1 गतिं (for दिशं).

38 $^{a}$) B5 G1 दृष्टो. Ś1 T G भगवता. — $^{b}$) M महाबलः. — $^{c}$) K2 G1 °वीरस्य; Cd as in text. — $^{d}$) Ñ3 V1 B D प्रतियोद्धा महारथः (D5 °त्मनः). Cd cites विनाशाय (as in text).

Colophon om. in S (cf. v. l. 26 above). — *Sub-parvan:* K0 हैडंबं; Ñ V1 हिडिंबवध; to it K0 Ñ1.3 add समाप्त. — *Adhy. name:* Ś1 K1–4 Ñ1.3 V1 B D घटोत्कचोत्पत्तिः. — *Adhy. no.* (figures, words or both): B1 151; Dn3 154; D3m 157. — *S'loka no.:* Dn1 42; Dn2 45; Dn3 46.

## 144

1 Ś1 K1.3 D3 om. उवाच; S om. the ref. — The sequence in S is 3, 5, 1575*, 1–2, 4, 1574*, 6 etc. (but cf. v. l. 7 also). — $^{a}$) V1 Dn D2.4 S गत्वा (for वीरा). Ñ3 D5 ते वने व्यचरन्वी°; D1 ते च सर्वे वने गत्वा. — $^{b}$) Ś1 K1 ततो; Cd घ्नन्तो (as in text)! — $^{c}$) K3 पराक्रम्य; T G अति°. T1 महाराज (for ययू राजन्). — $^{d}$) K4 महाबलाः. — K2 (hapl.) om. from महारथाः upto प्रेक्षमाणाः (in 2$^{d}$).

2 K2 om. up to °माणाः (cf. v. l. 1). — $^{b}$) T2 G3–6 °कानां वनानि च; G1.2 °कान्यवनांस्तथा. — $^{d}$) A few MSS. प्रेक्ष्य°.

3 For sequence in S cf. v. l. 1. — $^{a}$) K3–4 D5 जटा; D1 M6–8 जटां. — $^{c}$) T G transp. सह and कुन्त्या.

4 For S, cf. v. l. 1. — $^{b}$) Ñ1.3 G2 रममाणा. — After 4$^{ab}$, G1 ins.:

1573* नित्यकर्म प्रकुर्वन्तो वन्यमूलफलाशनाः ।

— $^{c}$) T G3.4.6 छन्नेन; G2.5 शनैश्च; Cd as in text. K (except K3) D5 वर्तंतस् (D5 °ते). — $^{d}$) S (except T1 G2.3) °ग्मुः पृथया सह. — After 4, S ins.:

1574* पथि द्वैपायनं सर्वे ददृशुः स्वं पितामहम् ।

5 For S, cf. v. l. 1. — $^{a}$) K (except K1) ब्राह्मयं; D2 T1 M5 ब्रह्म-; Cd as in text. Ñ1 अधीयंतो. — $^{b}$) T1 तपश्चरणतत्पराः. — $^{cd}$) Ñ2 धर्मज्ञं; V1 Dn सर्वज्ञा; M (except M5) धर्मांश्च. B5 transp. धर्मज्ञाः and ददृशुः. T1 न्यायज्ञानां; T2 G4 धर्मज्ञानां; G1.2 न्यायज्ञानं; G3 न्यायशास्त्रं; G5.6 धर्मज्ञानं; M न्यायज्ञानः (for ददृशुस्ते). S च पांडवाः (for पिता°). — After 5, S ins.:

1575* शालिहोत्रप्रसादेन लब्ध्वा प्रीतिमवाप्य च ।
[ T2 G1–6 प्रीतिमनुत्तमं. ]

6 D5 om. 6. — $^{abc}$) S अभिप्रणम्य शिरसा पाराशर्यमुपेत्य च । ते पादौ जगृहुस्तस्य. — S transp. सह and मात्रा in 6$^{a}$; and, after 6, ins.:

नीतिशास्त्रं च धर्मज्ञा ददृशुस्ते पितामहम् ॥ ५
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा ।
तस्थुः प्राञ्जलयः सर्वे सह मात्रा परंतपाः ॥ ६

व्यास उवाच ।

मयेदं मनसा पूर्वं विदितं भरतर्षभाः ।
यथा स्थितैरधर्मेण धार्तराष्ट्रैर्विवासिताः ॥ ७
तद्विदित्वास्मि संप्राप्तश्चिकीर्षुः परमं हितम् ।
न विषादोऽत्र कर्तव्यः सर्वमेतत्सुखाय वः ॥ ८
समास्ते चैव मे सर्वे यूयं चैव न संशयः ।
दीनतो बालतश्चैव स्नेहं कुर्वन्ति बान्धवाः ॥ ९
तस्मादभ्यधिकः स्नेहो युष्मासु मम सांप्रतम् ।
स्नेहपूर्वं चिकीर्षामि हितं वस्तन्निबोधत ॥ १०
इदं नगरमभ्याशे रमणीयं निरामयम् ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥ ११

वैशंपायन उवाच ।

एवं स तान्समाश्वास्य व्यासः पार्थानरिंदमान् ।
एकचक्रामभिगतः कुन्तीमाश्वासयत्प्रभुः ॥ १२
जीव पुत्रि सुतस्तेऽयं धर्मपुत्रो युधिष्ठिरः ।

---

1576* व्यास ।
तदाधर्माद्विनिर्गमनं मया ज्ञातं नरर्षभाः ।
घटोत्कचस्य चोत्पत्तिं ज्ञात्वा प्रीतिरवर्धत ।,
which is followed by 11 (there being in S a repetition of $11^{cd}$)

7 D5 S read 7–10, $11^{cd}$–17, 19–20 ($20^{cd}$ being repeated after $18^{ab}$) *after a passage ins after* 1 143 26 and given in App I (No 89) K1 8 S om उवाच — $^{a}$) Ś1 K (except K4) Ñ1 3 D5 M8 ममेद Ñ2 V1 B D (except D5) व्यसन (for मनसा) K (except K1) सर्वं — $^{b}$) Ñ3 B Da D2 4 मनसा विदित नृपा — $^{c}$) T1 यत्र Ñ1 स्थिता, Ñ2 V1 B1 6 D T2 G5 6 M8 5 तु तैर्, Ñ3 स्थ तैर्, G4 पि तैर् Ñ1 स्वधर्मै° — $^{d}$) D5 M6 8 °ट्रैरमर्षणै — After 7, D5 M6 8 ins
1577* विवासिताश्च मात्रा वै पापैर्दुर्मन्त्रणै सदा ।

8 For D5 S cf v 1 7 — $^{a}$) M6 8 त (for तद्) and °प्राप्ता (for °प्राप्त) — $^{b}$) Ko °र्षुर्वै पर हित, K2–4 Ñ1 3 G1 3 M6 8 चिकीर्षन्वै (G3 M6 8 °न्व) परं हित (Ñ1 परस्पर), D5 °र्षन्वयसहितम् — $^{c}$) M6 8 अथ (for अत्र) D5 T G °दो हि च कार्यं — $^{d}$) G1 2 M6–8 °त्सुखावह — After 8 D5 T2 G ins
1578* सुहृद्वियोगज कर्म पुरा कृतमरिंदमा ।
तस्य सिद्धिरिय प्राप्ता मा शोचत परतपा ।
समास्स दुष्कृते चैव यूय चैव न सशय ।
स्वराष्ट्रे विहरिष्यन्तो भविष्यथ सबान्धवा ।
[ (L 1) D5 द्विषंजन, T2 G5 °द्विरजन, G3 °द्वीरोजन, G4 °योजन, G6 °दां रजन G3 सव (for कर्म) — (L 2) G4 व्युष्टिर्, G5 वुद्धिर् G3 तस्माद्विधिमिमा प्राप्ता — (L 3) =(var) $9^{ab}$ G3 समास्ते दुष्कृतां D5 T2 G4–6 ते च (for चैव) — (L 4) T2 G4 6 °ष्यति G1 2 न सशय (for सबान्ध°) G3 विहरिष्यथ पांडवा ]

9 For D5 S, cf v 1 7 T2 om $9^{ab}$ With $9^{ab}$ of line 3 of 1578* — $^{a}$) T1 G4 5 M6–8 ससास्ते, G1 समानाद्य् T1 M6 8 दुष्कृते; G4 5 वत्सरे (for चैव मे) Ko transp मे and सर्वे Ś1 पूर्वे — $^{d}$) K2 D5 G3 M6–8 पाण्डवा, V1 B1 Dn D1 M6. 8 मान° (for बान्ध°)

10 For D5 S, cf v 1 7 — $^{b}$) Ñ1 युष्माक D5 T G सम्प्रति (for सांप्र°) — $^{d}$) Ko 4 वक्तु, T G वचन् Ś1 निबोध मे — After 10, S reads $11^{cd}$ for the first time (repeating it after $11^{ab}$, cf v 1 6)

11 S reads 11 after 1576* (cf v 1 6) repeating $11^{cd}$ here — $^{a}$) A few MSS °भ्यासे — $^{b}$) K4 °च मनोमय — $^{c}$) Ś1 K1 वसतो हि — S ins after (the first occurrence of) $11^{cd}$ D5 after 11
1579* एतद्वै शालिहोत्रस्य तपसा निर्मित सर ।
रमणीयमिद तोय क्षुत्पिपासाश्रमापहम् ।
कार्यार्थिनस्तु षण्मास विहरध्व यथासुखम् ।

12 N1 3 G1–4 M om वैश° उ° Ś1 K1 8 D2 5 G5. 6 om उवाच — $^{a}$) T2 G1 8 (all first time) इति सर्वान् B6 Da transp एव and स तान् B3 समाभाष्य — $^{b}$) Ñ2 V1 B D (except D5) व्यास सत्यवतीसुत — $^{c}$) Ñ2 B1 चाभिगतु, B3 m अभिगतु, G3 अभिरता S (*first time*) स्नेहाच्च स(G3 स्नेहात्पार्थान्)परिष्वज्य, G4 (second time) एव च तानभिज्ञातान् — $^{d}$) K4 B6 D1 4 T G (except G1) °श्वासयन् S ins after (the first occurrence of) $12^{cd}$ D5, after 12
1580* कृपे मा रोद मा रोदेत्येव व्यासोऽब्रवीद्वच ।
Thereafter M6 5–7 ins 1585* — After 12, K4 Ñ3 3 B D1 2 ins
1581* पुनरेव च धर्मात्मा इद वचनमब्रवीत् ।;
while S ins
1582* व्यास ।

पृथिव्यां पार्थिवान्सर्वान्प्रशासिष्यति धर्मराट् ॥ १३
धर्मेण जित्वा पृथिवीमखिलां धर्मविद्वशी ।
भीमसेनार्जुनबलाद्भोक्ष्यत्ययमसंशयः ॥ १४
पुत्रास्तव च माद्र्याश्च सर्वे एव महारथाः ।
स्वराष्ट्रे विहरिष्यन्ति सुखं सुमनसस्तदा ॥ १५
यक्ष्यन्ति च नरव्याघ्रा विजित्य पृथिवीमिमाम् ।
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः ॥ १६
अनुगृह्य सुहृद्वर्गं धनेन च सुखेन च ।
पितृपैतामहं राज्यमिह भोक्ष्यन्ति ते सुताः ॥ १७
एवमुक्त्वा निवेश्यैनान्ब्राह्मणस्य निवेशने ।
अब्रवीत्पार्थिवश्रेष्ठमृषिर्द्वैपायनस्तदा ॥ १८
इह मां संप्रतीक्षध्वमागमिष्याम्यहं पुनः ।
देशकालौ विदित्वैव वेत्स्यध्वं परमां मुदम् ॥ १९
स तैः प्राञ्जलिभिः सर्वैस्तथेत्युक्तो नराधिप ।
जगाम भगवान्व्यासो यथाकाममृषिः प्रभुः ॥ २० C. 1. 6.02; B. 1. 155. 19; K. 1. 170. 14

इति श्रीमहाभारते आदिपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

---

कुर्याच्च केवलं धर्मं दुष्कृतं च तथा नरः ।
सुकृतं दुष्कृतं लोके न कर्ता नास्ति शोभने ।
अवश्यं लभते कर्ता फलं वै पुण्यपापयोः ।
दुष्कृतस्य फलेनैव प्राप्तं व्यसनमुत्तमम् ।
तस्मान्माधवि मानार्हे मा च शोके मनः कृथाः । [5]

[M om व्यास — (L 1) M3 5 केवल कुरुते धर्मं, M6-8 केवल धर्मं कुरुते M न (for च) T1 G2 तदा न°, G6 नराधम — (L 2) G1 सतत (for सुकृ°) — (L 3) M कृती (for कर्ता) — (L 5) G3 मा शुच, M3 5 मानवि ] — Thereafter S reads $18^{ab}$

13 For D5 S cf v l 7 — M3 5-7 om 13-17 — Before 13, Ś1 K1 ins व्यास, K0 2-4 Ñ2 3 V1 B (except B2) D (except D5) व्यास उ° — $^{a)}$ V1 Dn D3 जीवत् Ś1 K1 3 4 वत्से, K3 D5 S (M3 5-7 om) पुत्रे — $^{b)}$ K3 4 Ñ V1 B D (except D1 5) G1 2 M3 धर्मजितो — Ñ1 2 V1 B D (except Da2 D5) transp $13^{cd}$ and $14^{ab}$.

14 For D5 S (M3 5-7 om) cf v l 7 — $^{ab)}$ Ñ2 V1 B D (except D5) transp जित्वा and पृथिवीं, and (for $14^{b}$) read महात्मा पुरुषर्षभ — After $14^{ab}$, N2 V1 B Da Dn D1 2 4 ins

1583* पृथिवीमखिलां जित्वा सर्वां सागरमेखलाम् ।;

while D5 T2 G (except G1 2) ins

1584* स्थापयित्वा वशे सर्वां सपर्वतवनां शुभाम् ।

— $^{d)}$ D5 T1 M3 असशय Ś1 K1 N1 2 भोक्ष्यतेयमसंशय (Ñ1 °च); K0 2-4 Ñ2 V1 B Da Dn D1 2 4 °ते नात्र (K3 °त्येप न) संशय

15 For D5 S (M3 5-7 om) cf v l 7 — $^{a)}$ G5 कुत्या (for पुत्रा), cf. 1 145 $2^{b}$ — $^{b)}$ K0 2 4 Ñ B D3 M3 महाबला D5 T G पञ्चैते पुरुषोत्तमा — $^{c)}$ K4 D1 स्वे (for स्व) — $^{d)}$ K0 2 4 Ñ V1 B D T2 G4 5 सदा

16 For D5 S (M3 5-7 om) cf v l 7 — $^{a)}$ K1 यक्ष्यते, K4 जेष्यति Ñ1 च महाभागा — $^{b)}$ Ñ3 V1 B3 6 D (except D2 5) निर्जित्य — $^{d)}$ Ñ2 B1 3 बहुभिश्च Ñ3 B Da D2 4 चाप्तदक्षि°.

17 For D5 S (M3 5-7 om) cf v l 7 — $^{a)}$ Ñ1 2 °द्वर्गान्, G4 5 °द्वश — $^{b)}$ Ñ1 बले° (for धने°) G3 6 बले° (for सुखे°) Ñ3 3 V1 B D (except D5) भोगैश्वर्यसुखे° — $^{d)}$ Ś1 K N V1 Da Dn1 n2 D1 2 इमे (K3 इद, Ñ1 3 इम) D5 T G M3 आहरिष्यति (for इह भो°) — After 17, Ś1 ins (an additional) colophon — D5 T G (G3 om lines 2-3) M3 ins after 17 M3 5-7, after 1580* (cf v l 10)

1585* स्नुषा कमलपत्राक्षी नाम्ना कमलपालिका ।
वशवर्तिनी तु भीमस्य पुत्रमेषा जनिष्यति ।
तेन पुत्रेण कृच्छ्रेषु भविष्यथ च तारिता ।

which in S is followed by 19-20 (partly om in some MSS, see below)

18 S (which om $18^{cd}$) read $18^{ab}$ after 1582* (cf v l 12) — Before 18, S1 K1 3 D2 ins वैश°, K0 2 4 Ñ3 3 (marg sec m.) B D (except D5) वैश° उ° — After $18^{ab}$, G1 2 M read $20^{cd}$, repeating it in its proper place — D5 S om $18^{cd}$ — $^{c)}$ K0 2 Ñ1 2 °श्रेष्ठान्, K3 पाडव ज्येष्ठ, Ñ3 V1 B (except B5) D (D5 om) पाडवश्रे°

19 S (G3 M3 5-7 om) reads 19 after 1585* (cf v l 17) — Before 19, K3 ins श्रीव्यास — $^{a)}$ S1 K2 3 4 Ñ V1 B (except B5) Dn D5 T G (G3 om) M3 इह मास (or मा स) प्र° — $^{b)}$ Ś1 K1 °काल K0 B Da2 D1 3 4 °स्वैव — $^{d)}$ S1 K1 वत्स्य°, Ñ2 V1 B Da Dn D2 4 लप्स्य°, D1 लिप्ससे, T2 G2 4 5 °ध्वे Ś1 K0 1 Ñ1 G2 M3 वै परां (for परमां) K3 लप्स्यथैव दुरासद

## १४५

जनमेजय उवाच ।
एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
अतः परं द्विजश्रेष्ठ किमकुर्वत पाण्डवाः ॥ १
वैशंपायन उवाच ।
एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने ॥ २
रमणीयानि पश्यन्तो वनानि विविधानि च ।
पार्थिवानपि चोद्देशान्सरितश्च सरांसि च ॥ ३
चेरुर्भैक्षं तदा ते तु सर्व एव विशां पते ।
बभूवुर्नागराणां च स्वैर्गुणैः प्रियदर्शनाः ॥ ४

---

20 G3 M3.5–7 om. $20^{ab}$. T2 G (G3 om.) M8 जनाधिप. — S repeats $20^{cd}$ (see below). — $^{d}$) Ñ2 V1 B D T G यथागतम्.

☞ *To guide the reader in the labyrinth of the* S interpolations and transpositions noted above, it may be observed that in interpolating another visit of Vyāsa (in the interval between the killing of Hiḍimba and the arrival of Pāṇḍavas in Ekacakrā) S rearranges the matter from 1. 143. 26 up to the end of adhy. 144 as follows:

1. 143. 26
(App. I, No. 89)
144. 7–10, $11^{cd}$
(1579*)
12
(1580*)
13–17 (om. in M except M8)
(1585*)
19–20
*Colophon.*
(1565*)
143. $27^{ab}$
(1566*)
$27^{cd}$–35
(1569*)
37–38, $36^{ab}$
(1570*)
$36^{cd}$
(1571*)
144. 3, 5
(1575*)
1–2, 4, 6
(1576*)
11–12 ($11^{cd}$–12 are repeated)
(1582*)
$18^{ab}$ (om. $18^{cd}$)
$20^{cd}$ (repeated; see above)
*Colophon.*

Colophon om. in D5 and lost in G1 on a broken portion. — *Major parvan:* T2 G1–6 M संभव° (for आदि°). — *Sub-parvan:* Ñ2.3 V1 हिडिंबवध; B5 बकवध. — *Adhy. name:* Ś1 K1.2 D2 एकचक्राप्रवेशः (K0 °निवासः); K0.4 व्याससंवादः (K4 °दर्शनं); K3 Ñ1.2 V1 Dn D1 एकचक्राप्रवेशो व्यासदर्शनं (K3 °संवादः); Ñ3 B1.3.6 Da D3 एकचक्रायां; M3.5 घटोत्कचोत्पत्तिः. — *Adhy. no.* (figures, words or both): B1 T1 152; Dn2 155; D1m 158; T2 G3 M 103; G2.6 104; G3.4 102. — *S'loka no.:* Dn 19 (Dn3 20); M3 34. — *Aggregate s'loka no.:* Dn1 6096.

### 145

1 Ś1 K1 S om. उवाच. G6 om. the rest with st. 1. — $1^{ab}$ = $2^{ab}$. — $^{a}$) T G (G6 om.) M3 गताः पार्थाः; M3.6–8 अभिगताः. — $^{b}$) T2 G3 कुंतीयुक्ताः. S (G6 om.) महाबलाः. — Ś1 K3 (hapl.) om. $1^{c}$–$2^{b}$. — $^{c}$) Ñ1 ततः परं; Ñ2 V1 B1 Dn D1.2 अत ऊर्ध्वं. — $^{d}$) K0.4 D1.2.4 T1 G3 M3.6–7 °कुर्वत; K3 D5 °कुर्वंति. G1.2.4 प्रर्षिताः.

2 Ś1 K3 om $2^{ab}$ (cf. v. l. 1). K1 D2.5 S om. उवाच. — $2^{ab}$ = $1^{ab}$. — $^{a}$) T2 G3 ते वै; G1.2.4.5 M6–8 पार्थाः. G6 om. $2^{bc}$. — $^{b}$) T2 G6 पुत्राः कुंत्या (T2 °तेन). T G3 M3.5 महाबलाः. G1.2.4 ब्राह्मणाकारशोभिताः. — $^{c}$) T G (G6 om.) ऊषुस्ते सुचिरं कालं.

3 G2 om. 3. — $^{b}$) Ś1 हि; K3 B (except B3) D3 D1.2.4 उत (for च). K0 Ñ1 D5 वनान्युपवनानि च. — $^{c}$) M6–8 पर्वतानां वनोद्देशान्.

4 $^{ab}$) B1m D2 भिक्षां. T G4–6 M3 (inf. lin.).6–8 सदा. Ś1 K1 भोक्तुं (for ते तु). G1.2 भैक्षमेवाचरंतस्ते

निवेदयन्ति स च ते भैक्षं कुन्त्याः सदा निशि ।
तया विभक्तान्भागांस्ते भुञ्जते स्म पृथक्पृथक् ॥ ५
अर्धं ते भुञ्जते वीराः सह मात्रा परंतपाः ।
अर्धं भैक्षस्य सर्वस्य भीमो भुङ्क्ते महाबलः ॥ ६
तथा तु तेषां वसतां तत्र राजन्महात्मनाम् ।
अतिचक्राम सुमहान्कालोऽथ भरतर्षभ ॥ ७ C. 1. 6139 B. 1. 157. 7 K. 1. 171.

जटिला ब्रह्मचारिणः — (var.) line 2 of 1586*. — After $4^{ab}$, S (except G1.2) ins.:

1586* युधिष्ठिरं च कुन्तीं च चिन्तयन्त उपासते ।
भैक्षं चरन्तस्तु सदा जटिला ब्रह्मचारिणः ।

[ (L. 1) M6-8 इवासते. — (L. 2) T G3 M तदा (for सदा). ]

— $^{c}$) M2.3 स्वैर्गुणैः (for बभूवुः). T G4-6 ते; G3 तु (for च). — $^{d}$) K1 B1.6 D2 G6 स्वगुणैः; T1 G2.3 गुणैः सु- (G2 सं-); G1 गुणैर्वै; M2.3 बभूवुः. K3 अतिवर्चसः. — After 4, S (T2 om. lines 6–7) ins.:

1587* नागराः ।
दर्शनीया द्विजाः शुद्धा देवगर्भोपमाः शुभाः ।
भैक्षार्हा न च राज्यार्हाः सुकुमारास्तपस्विनः ।
सर्वलक्षणसंपन्ना भैक्षं नार्हन्ति नित्यशः ।
कार्यार्थिनश्चरन्तीति तर्कयन्त इति ब्रुवन् ।
बन्धूनामागमाक्षित्यमुपचिन्त्य तु नागराः ।
भोजनानि च पूर्णानि भक्ष्यभोज्यैरकारयन् ।
मौनव्रतेन संयुक्ता भैक्षं गृह्णन्ति पाण्डवाः ।
माता चिरगतान्दृष्ट्वा शोचन्तीति च पाण्डवाः ।
त्वरमाणा निवर्तन्ते मातृगौरवयन्त्रिताः ।

[ (L. 1) G2 श्रियाः शुद्धा महात्मानो (for the prior half). — (L. 2) G2 (prior half corrupt) चरंति द्विजवेश्मसु (for posterior half). — After line 2, G3.4 ins.:

1588* नैते यथार्थतो विप्राः सुकुमारास्तपस्विनः ।
चरन्ति भूमौ प्रच्छन्नाः कस्माच्चित्कारणादिह ।

— (L. 3) G1.2 वेपतः (for नित्यशः). — (L. 4) G1.2 तर्कयंतः सुरा इति. — (L. 5) G2 साधूनामागमाक्षिप्तं मुदितास्ते तु नागराः. — (L. 6) T1 G3 M भाजनानि. — (L. 8) G1.2.4 शोचंती पांडवान्प्रति; M शोचंतीति च पार्थिव. — After line 8, T1 G2.4-6 ins.:

1589* दुःखाश्रुपूर्णनयना लिखन्त्यास्ते महीतलम् ।
भिक्षित्वा द्विजगेहेषु चिन्तयन्तश्च मातरम् ।

— (L. 9) M पांडवा दुःखिता भृशं (for posterior half). ]

5 $^{a}$) Ñ2 V1 B D (except D5) T1 G3 M6 तदा; T2 G4-6 M2.6-8 सदा (for च ते). G1.2 मात्रे निवेदयंति स्म. — $^{b}$) Some MSS. भैक्ष्यं. K0 Ñ1 D5 कुंत्या भिक्षां; K1 भक्ष्यं कुंत्याः; Ñ2.3 V1 Da Dn D1.4 कुंत्या भैक्षं; B कुंत्यां भैक्षं; D2 T2 G3-6 कुंत्यै भै(D2 भ)क्ष्यं; T2 G3-6 M भैक्षं कुंत्यै. B5 तथा निशि; D3.4 (before corr.) M तदा निशि; T G3-6 च ते निशि; G1.2 दिवानिशं. — After $5^{ab}$, G3 ins.:

1590* सर्वसंपूर्णभैक्षान्नं मात्रा दत्तं पृथक्पृथक् ।

— $^{cd}$) Ñ1 B5 तदा; G4 तथा (for तया). K3 ते भागान्; K4 ते भागं; T2 G1.4 भैक्षांश्च; G3 M भिक्षांशान् (for भागांस्ते). Ś1 K1.3 G3 तया विभक्तभागांश्च (G3 °स्ते). G1.2 विभज्य भुंजतेष्टं ते यथाभागं पृ°.

6 $^{ab}$) G3 आदौ (for अर्धं). T1 G3 स (for ते), and पंच (for वीराः). G1.2 युधिष्ठिरार्जुनौ कुंती यमावर्धं च भुंजते. — $^{cd}$) Ś1 K1 G3 भक्षस्य सर्वस्य; K3 Ñ2 V1 B1.6 Dn1.n2 D1 G1.2.6 M6-8 सर्वस्य भैक्षस्य; T2 G1.3 अन्नस्य सततं. G4 भुंक्ते भीमो (by transp.). T2 G4-6 महाभुजः. K0 अर्धं तु भीमसेनश्च एक एव महा°. — After 6, S (T2 G3.6 om. line 1) ins.:

1591* न चाशितोऽसौ भवति कल्याणान्नभृतः पुरा ।
स वैवर्ण्यं च कार्श्यं च जगामातृप्तिकारितम् ।

[ (L. 1) T1 न चापि तृप्तिर्; G1 न चाशितस्य; G2 °तं च; G3.4 °तोस्ति. — After line 1, M6-8 ins. 1593* (cf. v. l. 7). — After line 2, G3.4 ins.:

1592* आज्यबिन्दुर्यथा वह्नौ महति ज्वलिते यथा ।
तथार्धभागं भीमस्य भिक्षान्नस्य नृपोत्तम । ]

7 D2 om. 7. — $^{a}$) K0.4 M वसतां तेषां (by transp.); K1 तेषां भवतां. D5 तथा तेषां तु वसतां; T G तथैव वसतां तत्र (T G3.6 तेषां). — $^{b}$) K3 नगरेषु; Ñ2 V1 B Da Dn D1.4 तस्मिन्राष्ट्रे; Ñ3 तत्र राष्ट्रे; T G (except G4.5) तेषां (T2 G6 सतो) राजन्. — Dn2 om. $7^{c}$–$8^{d}$. — $^{d}$) Ś1 K1.2 D5 वै; K0 च; Ñ3 हि (for ऽथ). K4 कालो भरतसत्तम. — T2 G ins. after 7; M6-8, after line 1 of 1591*:

1593* भीमोऽपि क्रीडयित्वा तु मिथो ब्राह्मणबन्धुषु ।
कुम्भकारेण संबन्धं लेभे पात्रं वृकस्तदा ।
स ददाति महत्पात्रं भीमाय प्रहसन्निव ।
तस्याद्भुतं कर्म कृत्वा महन्मृद्भारमाददे ।
तस्य भारः शतगुणः कुम्भकारमतोषयत् ।
चक्रे चक्रे च मृद्भाण्डान्सततं भैक्षमाहरन् ।
तदादाय गतं दृष्ट्वा हसन्ति प्रहसन्ति च ।
भक्ष्यभोज्यानि विविधान्यादाय प्रक्षिपन्ति च ।
एवमेव सदा भुक्त्वा मात्रे ददाति वै रहः ।

ततः कदाचिद्भैक्षाय गतास्ते भरतर्षभाः ।
संगत्या भीमसेनस्तु तत्रास्ते पृथया सह ॥ ८
अथार्तिजं महाशब्दं ब्राह्मणस्य निवेशने ।
भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत ॥ ९
रोरूयमाणांस्तान्सर्वान्परिदेवयतश्च सा ।
कारुण्यात्साधुभावाच्च देवी राजन्न चक्षमे ॥ १०
मथ्यमानेव दुःखेन हृदयेन पृथा ततः ।
उवाच भीमं कल्याणी कृपान्वितमिदं वचः ॥ ११
वसामः सुसुखं पुत्र ब्राह्मणस्य निवेशने ।
अज्ञाता धार्तराष्ट्राणां सत्कृता वीतमन्यवः ॥ १२
सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं न्वहम् ।
प्रियं कुर्यामिति गृहे यत्कुर्युरुषिताः सुखम् ॥ १३
एतावान्पुरुषस्तात कृतं यस्मिन्न नश्यति ।
यावच्च कुर्यादन्योऽस्य कुर्यादभ्यधिकं ततः ॥ १४
तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम् ।
तत्रास्य यदि साहाय्यं कुर्याम सुकृतं भवेत् ॥ १५

भीम उवाच ।

ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम् ।

---

[ (L. 1) M6-8 हितो (for मिथो). — (L. 2) G1.2.6 संबंधात्. G1.2 M6-8 महत्तरं; G6 परंतपः (for सुहृत्तदा). — For line 3, G2 subst.:

1594* कुम्भकारोऽददात्पात्रं महत्कृत्वा तु पात्रकम् ।
प्रहसन्भीमसेनाय विस्मितस्तस्य कर्मणा ।

— (L. 5) G1.2 मृद्भारैः शतसाहस्रैः (for the prior half.). — (L. 6) G1.2 यावत्स कुरुते भाण्डान्सपुत्रः शरदां शतं. — (L. 7) G1.2 दृष्ट्वा भीमस्य तत्पात्रं (for the prior half.). — After line 9, T2 G (except G1) M6-8 repeat line 1 of 1591* (v.l.: T2 G2-6 न चाशितोस्मि भवति; M6-8 न चाश्नीते न भवति. G3 क्षुन्मामेव प्रबाधते).] Thereafter G2 ins.:

1595* इति पृष्टः सदा पौरैः क्षुधितः किल पाण्डवः ।

8 Dn1 om. 8 (cf. v. l. 7). — a) Some MSS. भैक्ष्याय. — b) Ś1 K1-3 Ñ2.3 V1 Da1 Dn1 D2.4.5 पुरुषर्षभाः; T1 मनुजर्षभाः. — c) Dn3 अगत्वा; T2 G4-6 संगम्य; G1.2 संवृत्य (for संगत्या). — d) Ś1 K D6 तत्रासीत्.

9 a) Ś1 K1 अथार्तजं; Dn1 अनर्थजं. — c) G1 भृशमुत्पादितं. G6 क्रूरं (for घोरं).

10 a) K0 Ñ2 V1 B D (except D6) तान्दृष्ट्वा. — b) K0 तु सा; T1 G3 तदा (for च सा). — c) K0 Ñ1 D6 साधुवादाच्च. — d) Ñ2 V1 B D (except D6) T1 कुंती (for देवी). Ñ1 चैनस्य चक्षमे.

11 a) K4 B4 Dn3 G3 M6.8 मथ्यमानेन; D6 पीड्यमानेव. — b) Ś1 तथा; Ñ1.2 V1 B D (except D6) तदा (for ततः). G1.2 हृदये कुंतिभोजजा. — d) G3 कृपायुतम्. K0 कृपयाभिपरिप्लुता.

12 Before 12, K4 ins. पृथा उ°; M6-8 कुंती. — Ś1 om. 12ab. — a) K0.1 Ñ V1 B Dn T G1.2.4 M6 वसाम. K0 D6 पुत्र सुसुखं (by transp.). K1 तात; M नित्यं (for पुत्र). — b) T1 G1-3 ब्राह्मणस्येह वेश्मनि. — c) Ñ2 V1 B1.3m.5.6 D (except D6) धार्तराष्ट्रस्य. B2 रमणीयानि पश्यंतो. — d) Ś1 K1 संनता वी°.

13 a) D5 G3 तदा पुत्र. — b) Ś1 Ñ1.2 D5 D1.4.5 T1 किं त्वहं; K1 किं बहून्. K0 2-4 ब्राह्मणस्य कदा त्वहं. — c) S कदा प्रियं करिष्यामि. — d) K2 Ñ B D5 S यत्कुर्यांद् (G1.2 °र्यांम्). K1.2 Ñ1.2 B1.3m.5.6 D5 D4 T1 G3 M उषितः; B2 वसतः. T2 G4-6 वयं (for सुखम्). D6 यस्य पर्युषिता वयं.

14 a) G1.2 स एव पुरुषो लोके. — b) Ś1 K2 यस्य (for यस्मिन्). K0 हीयते; K3.4 Ñ3 Da1 D6 T1 पश्यति. — c) Ñ3 B3 (m as in text) T2 G4-6 अन्योन्यं; M अस्यान्यत् (M2.5 °न्यः).

15 a) T2 G4-6 तथेदं. M2.5 ब्राह्मणस्यास्य. — c) K1 सहायं यदि तत्रास्य. — d) Ś1 K Ñ3 कुर्याम (K3 °व) सहस्रं; Ñ1.2 V1 B D कुर्यामु(D5 °हु)पकृतं; G4.6 कुर्यां (G5 °र्यात्) साधुकृतं.

16 Ś1 G3 भीमसेनः; K1 T G1.4-6 M भीमः; Ñ1.2 V1 B1 D (except Dn1 D3.5) भीमसेन उ°; G2 om. the ref. — a) T1 G3 अस्य दुःखं वै. G2 भीम विज्ञायतामस्य. — b) G3 एतत् (for एव). M6-8 समन्वितं (for समु°). K4 यथैव समुपस्थितं; G1 कुतो दुःखमुपस्थितं. — c) Ñ2 V1 B D T2 G4-6 M विदित्वा. T1 G1-3 हि व्यवस्यामि (for व्यवसि°).

17 Ś1 K1 Ñ B (except B6) Da D5 T G om. the ref.; K2-4 D6 M om. उवाच. — a) K2 T G1-3 एव; K4 Ñ2 तु; M7 अपि (for हि). K4 T1 G1 तु (for तौ). Ñ1 V1 B D (except D6) G3 एवं तौ कथयंतौ तु (Ñ2 V1 B4 Dn D1 च). — b) Ś1 G1-3 M6-8 शुश्रुवतुः. K0 G1-3 ... — c) T1 आर्ति जनस्य; M6-8 °अं तत्र. G4.6 दुःखस्य स्वरं. — (for विप्र°).

विदिते व्यवसिष्यामि यद्यपि स्यात्सुदुष्करम् ॥ १६

वैशंपायन उवाच ।

तथा हि कथयन्तौ तौ भूयः शुश्रुवतुः स्वनम् ।
आर्तिजं तस्य विप्रस्य सभार्यस्य विशां पते ॥ १७
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः ।
विवेश कुन्ती त्वरिता बद्धवत्सेव सौरभी ॥ १८
ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च ।
दुहित्रा चैव सहितं ददर्श विकृताननम् ॥ १९

ब्राह्मण उवाच ।

धिगिदं जीवितं लोकेऽनलसारमनर्थकम् ।
दुःखमूलं पराधीनं भृशमप्रियभागि च ॥ २०
जीविते परमं दुःखं जीविते परमो ज्वरः ।
जीविते वर्तमानस्य द्वन्द्वानामागमो ध्रुवः ॥ २१
एकात्मापि हि धर्मार्थौ कामं च न निषेवते ।
एतैश्च विप्रयोगोऽपि दुःखं परमकं मतम् ॥ २२
आहुः केचित्परं मोक्षं स च नास्ति कथंचन ।
अर्थप्राप्तौ च नरकः कृत्स्न एवोपपद्यते ॥ २३
अर्थेप्सुता परं दुःखमर्थप्राप्तौ ततोऽधिकम् ।
जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरम् ॥ २४
न हि योगं प्रपश्यामि येन मुच्येयमापदः ।
पुत्रदारेण वा सार्धं प्राद्रवेयमनामयम् ॥ २५
यतितं वै मया पूर्वं यथा त्वं वेत्थ ब्राह्मणि । C. 1. 6128 B. 1. 157. 26 K. 1. 171. 43

---

18 a) B3 D1 अभ्यंतरं; T G1. 2. 4–6 M अंतर्गृहं. K3 आर्तो गृहं तस्य ततो; G3 अंतर्नेविगतास्तस्य. — c) Ś1 K2. 4 D4 कुंती सहसा; Ñ1. 2 V1 B Da Dn D1. 3. 4 M3 (by transp.) त्वरिता कुंती. — d) G5 M6–8 सौरभिः; Cd as in text.

19 a) G1–3 भीतं तं (for ततस्तं). — c) K3 T1 G1. 2 M7 सततं; G3. 5 वसतं (for सहि°). — d) K2 विवृताननं; K3 विगतप्रभं; Ñ1. 3 B5 विगता°; Ñ2 V1 B6 Dn D1 अवनता°; T2 G4–6 M विनता°; Cd as in text.

20 K1. 3 S (except M3) om. उवाच. — a) M3 लोलं (for लोके). — b) Ś1 K4 नन्वसारम्; K0 साल्प°; K2. 3 Ñ3 V1 Dn D1. 2–6 गत°; K2 स्वल्प°; Ñ1 G1. 2 नर°; B3 m द्वंद्व°; B5 न च सारम् (m as in text); D4 नष्ट°; G3 नांतः°; M6–8 न तु सारम्; Cd (corrupt) लडसारम्(?). — d) G5 M6–8 प्रियम् (for भृशम्). D2 G4–6 M5 °भावि च.

21 ab) Ś1 K1 D1 जीवितं (both times). — d) K0 V1 Dn D1. 2. 5 दुःखानाम्; Cd द्वन्द्वानाम् (as in text). Da Dn3 D2 G (except G4. 6) ध्रुवं.

22 a) Ñ2 V1 B1 m. 3. 5. 6 D (except D5) आत्मा ह्येको हि; B1 एकात्मा चैव; T G एकात्मना हि (G3 च); M एकात्मा यो (M6–8 या) हि. K1. 2. 4 धर्मार्थौ (K2 °र्थं); G3 धर्मादौ; G1 कामार्थौ. Cd cites (as in text) एकात्मा (= एकाकी). — b) T2 G5. 6 कामः; G4 धर्मः (for कामं). Ś1 K1. 3 यश्च; K2 V1 Dn D1. 3 चैव; B3 T1 M5 च स; B6 Da D4 न च (for च न). Ñ3 निवेश्यते; T2 G4–6 निषेव्यते. — c) K0 विप्रयोगोस्य; K4 °योगश्च; K3 °योगेस्य; K4 °योगैश्च; Dn3 D1. 4 T2 G3. 5. 6 °योगेऽपि; D5 °युक्तस्य°; T1 °योगो हि. — d) K0 3. 4 भवेत्; Ñ3 G1. 2 महत् (for मतम्). Ñ1. 3 परमसंमतं; Dn परमनंतकं; D1. 3 परमिकं मतं.

23 a) M3 केचित्प्राहुः (for आहुः केचित्). — c) Ñ1. 2 V1 B Da Dn D1. 3 तु (for च). S (M3 inf. lin.) नरकं (M3 orig. 5 परमं). Ś1 अनर्थप्राप्तौ नरकः; D2 अप्राप्तौ तस्य नरकः. K0 (hapl.) om. from च नरकः up to °प्राप्तौ (in 24b). — d) Ñ2 कृच्छ्रम्; T2 G4–6 M6–8 कृत्स्नम्. T1 G1–3 कृत्स्नमेवोपलभ्यते; M3. 5 दुःख(M3 inf. lin. कृत्स्न)मेवोपपाद्यते.

24 K0 om. up to प्राप्तौ (cf. v. l. 23). — a) K3 M3 सहदुःखं. — d) M विप्रयोगो महत्तरः (M3 °त्तमः; inf. lin. °त्तरः). — After 24, D5 (om. lines 3–4) T G ins.:

1596* यावन्तो यस्य संयोगा द्रव्यैरिष्टैर्भवन्त्युत ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ।
तदिदं जीवितं प्राप्य स्वल्पकालं महाभयम् ।
त्यागोऽप्ययं महान्प्राप्तो भार्यया सहितेन च ।

[ (L. 4) G2. 6 त्वया तु मम न श्रुतः (for posterior half). ]

25 b) Ś1 G3 °यमापदि; B1. 2 मुच्ये महापदः; B3 Dn3 D4 T1 G6 °यमापदं. — d) B1. 3 Da M3 5. 8 प्रद्रवेयम्; Cd (by corr.) as in text.

26 a) K0 D5 कथितं; T2 G5 यदुक्तं; G1. 2 विदितं; G3 यदिदं; G4 उदितं; G6 अधीतं (for यतितं). K1 च; K3 S हि (for वै). — b) T2 G2. 5 स्वार्थं नो; G6 न स्वार्थं (for यथा त्वं). Ñ1 वेत्सि. Ñ2 V1 B D (except D5) वेत्थ ब्राह्मणि तत्तथा. — c) K1 तथा; K2 यत्र; Cd यतः (as in text). Ñ1. 2 V1 B3. 6 D (except D5) क्षेमं यतः (by transp.). K3 तत्र; T1 मया; G3 तथा; Cd यतः (as

B 26 43 यतः क्षेमं ततो गन्तुं त्वया तु मम न श्रुतम् ॥ २६
इह जाता विवृद्धास्मि पिता चेह ममेति च ।
उक्तवत्यसि दुर्मेधे याच्यमाना मयासकृत् ॥ २७
स्वर्गतो हि पिता वृद्धस्तथा माता चिरं तव ।
बान्धवा भूतपूर्वाश्च तत्र वासे तु का रतिः ॥ २८
सोऽयं ते बन्धुकामाया अशृण्वन्त्या वचो मम ।
बन्धुप्रणाशः संप्राप्तो भृशं दुःखकरो मम ॥ २९
अथवा मद्विनाशोऽयं न हि शक्ष्यामि कंचन ।
परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ॥ ३०
सहधर्मचरीं दान्तां नित्यं मातृसमां मम ।
सखायं विहितां देवैर्नित्यं परमिकां गतिम् ॥ ३१
मात्रा पित्रा च विहितां सदा गार्हस्थ्यभागिनीम् ।
वरयित्वा यथान्यायं मन्त्रवत्परिणीय च ॥ ३२
कुलीनां शीलसंपन्नामपत्यजननीं मम ।
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम् ।
परित्यक्तुं न शक्ष्यामि भार्यां नित्यमनुव्रताम् ॥
कुत एव परित्यक्तुं सुतां शक्ष्याम्यहं स्वयम् ।
बालामप्राप्तवयसमजातव्यञ्जनाकृतिम् ॥ ३४

---

in text). — d) B5 च (for तु). K3 मम तु (by transp.). G3.6 त्वया तु न मनः कृतं; M त्वया च न च (M3.5 तु) तच्छ्रुतं.

27 a) Ś1 K0.2.4 Ñ3 सह; Ñ1.2 सा हि (for इह). K1 सह जातास्मि पित्रा वै. — b) K1 चेति; Ñ1 B Dn D1.2.4 चापि; S माता (for चेह). K3 M6-8 मतेति. K0.1.3 Ñ3 V1 B D वै; Ñ1 ह; Ñ3 वा (for च).

28 a) K1 सर्व°; G3 चारय° (for स्वर्ग°). K1 Ñ1.2 V1 B5 Da1 Dn D5 M3 अपि; T G M6-8 च (for हि). — b) Ś1 माता चैव; K0 यथा माता; B3 तथा मम (for तथा माता). Ś1 K1 चिरंतना; K0.2.3 D5 T2 G3 चिरात्तव; G1.2 मृतापि च. — c) Ñ3 बांधवाः सुहृदश्चापि. — d) Ś1 K1 T1 M तत्र (M3 °त्रा-) वासो न कारि(T1 कामि-; M6-8 कांक्षि)तः. — After 28, T G ins.:

1597* न भोजनं विरुद्धं स्यान्न स्त्री देशो निबन्धनम् ।
सुदूरमपि कार्यार्थे व्रजेद्रूढहंसवत् ।
[ (L. 2) G4.5 व्रजेत्प्राज्ञस्तु हंसवत्. ]

29 a) G3 शोकस्ते. G4 बद्धकामाया. — cd) G1.4 om. 29cd. M3 संवृत्तो (for संप्राप्तो). K0 D5 शोकपरो; K1 Ñ3 शोककरो; G3 M6-8 दुःखतरो. T3 G3.6 सेयमापदनुप्राप्ता भुंक्ष्व ब्राह्मणि तत्फलं. G3 reads 29cd as in text also after 1599*. — T3 G3 ins. after 29: G1.4, after 29ab:

1598* उपस्थितं तु कल्याणि यथेष्टमनुभूयताम् ।

— T3 G2.3 cont.:

1599* ब्राह्मणी ।
मामेव प्रेषय त्वं तु बकाय करमद्य वै ।

Thereafter G3 reads 29cd as in text. — G2 (om. the ref.) ins. after 1598*: G4, after 1599*:

1600* द्विजः ।
त्यागोऽयं मम संप्राप्तो मम वा मे सुतस्य वा ।
तव वा तव पुण्यान्न अत्र वासस्य तत्फलम् ।
न शृणोषि वचो मह्यं तत्फलं भुङ्क्ष्व भामिनि ।
अथवाहं न शक्ष्यामि स्वयं मर्तुं सुतं मम ।
एवं त्यक्तुं न शक्नोमि भवतीं न सुतामपि ।

30 a) K1 स विनाशोयं; T1 G3 M म(T1 त)द्विनाश G3.4 अथ मद्रक्षणार्थं वा. — b) Ś1 K4 B Da शक्यामि D5 वक्ष्यामि. Ś1 K3 Ñ3 Da Dn3 G3.6 M किंचन; कश्चन. — c) M3 अहं बालां.

31 ab) Ñ1 °चरी त्वं च. D2 इत्थं सहचरीं. K0 नित्यं दांतां (by transp.). D4 पितृमातृसमां. T3 G3 तथा मातृ° सदा. T1 G1-4 स्व(T2 G3 स)धर्मचारिणीं त्वां (G3 दत्तां) पुनर् (T1 G5 तथा) मातृ(G3 °श्र)समां तथा (G °दा). M सहधर्मचरीं नारीं दांतां मातृसमां सदा. — c) सखीं च (G5 हि) (for सखायं). — d) Ñ1 परिमितां D4 पारमिकां; G3.6 परमकां. K D5 S (except G1.4 M3) रतिं; Ñ1 रतिः; Ñ3 चितिं (for गतिं).

32 a) N (except Ś1) M6 पित्रा मात्रा (by transp.). K0.4 D4 तु (for च). Ñ1 विहिता; G3 M6-8 रहितां; M3 निहितां. — b) Ñ1 °भागिनी. G3 सा गार्हस्थ्यस्य भागिनीं; G6 सदा दाक्षिण्यभागिनीं. — d) M परिगृह्य च.

33 a) Ś1 K1 G3 M3 रूपसंपन्नाम्; Ñ1 सत्य°. G4 गृहमेधां प्रियां भार्यां. — b) Ñ1.2 V1 B6 Dn D1 अपि; T1 इमां; G6 अथ (for मम). — c) Ś1 K0-2 Ñ3 D1.3 G3.6 M (except M1) ताम् (for त्वाम्). — d) G4 शुश्रूषां सुपकारिणीं; M3 साध्वीं दमपरायणां. — e) Ś1 K1 D1.2 D5 D2 शक्यामि; G1.3 शक्नोमि. — f) G1.3 परमनुव्रतां. — After 33, M (om. lines 1-2) ins. 1602* (cf. v. l. 34).

34 M transp. 34ab and 34cd. — a) G3 कुतो पुत्र°. — b) N (except Ś1 K1) T1 G1-3 सुतं; T2 कन्यां; G3 पुत्रं. Ś1 B3 शक्याम्यहं. — G3 om. 34cd. — c) K (except

भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना ।
यस्यां दौहित्रजाँल्लोकानाशंसे पितृभिः सह ।
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे ॥ ३५
मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः ।
कन्यायां नैव तु पुनर्मम तुल्यावुभौ मतौ ॥ ३६
यस्मिँल्लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम् ।
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे ॥ ३७

आत्मानमपि चोत्सृज्य तप्स्ये प्रेतवशं गतः ।
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुम् ॥ ३८
एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः ।
आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना ॥ ३९
स कृच्छ्रामहमापन्नो न शक्तस्तर्तुमापदम् ।
अहो धिक्कां गतिं त्वद्य गमिष्यामि सबान्धवः ।
सर्वैः सह मृतं श्रेयो न तु मे जीवितं क्षमम् ॥ ४० C. 1. 6142 B. 1. 157. K. 1. 171.

इति श्रीमहाभारते आदिपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

K1) Ñ2 B D T2 G3.5 बालम्. G1.2.4 अप्राप्तयौवनं बालं. — d) D5 T1 अज्ञात°; G3 विजात°. — After 34, K3.4 D5 ins.:

1601* सुतां चैनां न शक्ष्यामि परित्यक्तुं कथंचन ।

— T G (except G6) ins. after 34: M (om. lines 1–2), after 33:

1602* प्रार्थयेऽहं परां प्रीतिं यस्मिन्स्वर्गफलानि च ।
दयितं मे कथं बालमहं त्यक्तुमिहोत्सहे ।
यस्य जातस्य पितरो मुखं दृष्ट्वा दिवं गताः ।
पितॄणामृणनिर्मुक्तो यस्य जातस्य तेजसा ।
तमहं ज्येष्ठपुत्रं मे कुलनिस्तारकं भुवि । [5]
मम पिण्डोदकनिधिं कथं त्यक्ष्यामि पुत्रकम् ।

[ (L. 1) G3 परां प्राप्तिं. — (L. 2) G3 दैवतं तं कथं बालं. — (L. 4) G1.4 अहं मुक्तः पितृऋणाद्; G3 अहं मुक्तोस्मि पितॄणां. — (L. 6) T1 कथं द्रक्ष्यामि. ]

— After 1602*, T G2.4.5 ins.:

1603* कुत एव परित्यक्तुं पुत्रीं शक्ष्याम्यहं स्वयम् ।

[ T1 G2 सुतं शक्ष्याम्यहं स्वकं (for posterior half). ]

35 a) Ñ1 B3 निक्षिप्तं. — b) D5 G3 महात्मनः; T1 स्वयंभुवा. — c) Ñ2 V1 B D (except D5) यया; G3 यत्र; M अस्यां. — d) Ñ3 पितृभिः समं. — e) T1 G1.2.4.5 उत्पादितां बालां.

36 b) T1 G1–3 पितुर्जनाः. — c) K3 इति चाप्यन्ये; Ñ1.3 नेति तु मनो; Ñ2 V1 B D (except D5) केचिदपरे; T1 G1–4 मातुरित्यन्ये; T2 G5.6 M अपरे केचिन् (for नैव तु पुनः). — d) K0.2 D5 मतावुभौ (by transp.); Ñ2 उभौ तु तौ; V1 B Da Dn D1.3.4 उभौ स्मृतौ; T1 G3 इमौ मतौ; G1.2 इमौ सुतौ.

37 a) Ś1 K1 अस्मिन्; K0.3.4 Ñ1.2 V1 Dn D1 यस्यां; D3 अस्यां (for यस्मिन्). K3 प्रसूयंते. T1 G3 यस्याः कामप्रसूतिश्च; T2 G4–6 M यस्यां लोके प्रतिष्ठा च; G1.2 यस्याः कामं प्रसुतं च. — b) T1 G1–3 प्रीतिर्; T2 G4–6 चरं; M रतिर् (for स्थिता). — c) S (except M3.5) कथं (for अहं). — d) T1 G1–3 अहमुत्स्रष्टुमु°; T2 G4–6 M6–8 उत्स्रष्टुमहमु°; M5 उत्स्रष्टुं कथमु°. — After 37, T G (G4.6 om. lines 1–2) ins.:

1604* मेधाविनीमदोषां च शुश्रूषुमनहंकृताम् ।
तामिमां मे सुतां बालां कथमुत्स्रष्टुमुत्सहे ।
काङ्क्षमाणां रतिं चैव सुखानि च बहून्यपि ।
उत्पादयन्त्यपत्यानि धर्मकामार्थहेतवे ।

38 b) T2 G4–6 तप्स्यां. K4 प्रेतगतिं. K4 G4.5 गताः; T2 मयि. Ñ2 V1 B D (except D5) तप्स्यामि परलोकगः; T1 G1–3 M गते प्रेतवशं मयि. — After 38ab, D5 marg. *sec. m.* ins.:

1605* स्वयं च न परित्यक्तुं शक्तोम्येतानहं यथा ।

— c) D5 त्यक्तं ह्येतन्; T1 त्यक्त्वा ह्येव. S सर्वे (for व्यक्तं). — d) Ś1 K3 M6–8 न हि; Ñ1 ते न; G1–3 नैव (for नेह). Ś1 शक्ष्यंति.

39 a) M om. च. — G6 M om. 39cd. — c) K0.4 D5 चापि; K3 चैव; G3 चेह (for चेमे).

40 a) K0 N1 सुकृच्छ्राम् (Ñ1 °च्छ्रम्); K3.4 Ñ3 T G1.2.4–6 M स कृच्छ्रम् (T1 सत्कृच्छ्रम्). G3 न कृच्छ्रवशमापन्नो. — b) G3 स (for न). M तद्वि(M5 °स्य)मोक्षणे. — f) Ñ1.2 V1 B Dn D1.4.5 च; T1 G1–3 M3.5 हि (for तु). K (except K1) D2 T G M5 जीवितुं. Ñ1 क्षणं; D5 G3 M5 क्षमः.

Colophon lost in G1 on a broken portion. — *Major parvan*: T2 G2–6 M संभव° (for आदि°). — *Sub-parvan*: Ś1 K Ñ V1 B3.6 D M5 बक(K4 बकासुर)वध; B1.2 एकचक्रायां बकवध. — *Adhy. name*: K4 M5 ब्राह्मणप्रलापः; Ñ1.2 V1 ब्राह्मणचिंता. — *Adhy. no.* (figures, words or both): B1 153; Dn3 156, D4m 159; T1 154, T2 G3 M 104; G2.6 105; G3.4 103. — *S'loka no.*: Dn 40; M5 50. — *Aggregate s'loka no.*: Dn2 6136.

# १४६

ब्राह्मण्युवाच ।
न संतापस्त्वया कार्यः प्राकृतेनेव कर्हिचित् ।
न हि संतापकालोऽयं वैद्यस्य तव विद्यते ॥ १
अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः ।
अवश्यभाविन्यर्थे वै संतापो नेह विद्यते ॥ २
भार्या पुत्रोऽथ दुहिता सर्वमात्मार्थमिष्यते ।
व्यथां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र वै ॥ ३
एतद्धि परमं नार्याः कार्यं लोके सनातनम् ।
प्राणानपि परित्यज्य यद्भर्तृहितमाचरेत् ॥ ४
तच्च तत्र कृतं कर्म तवापीह सुखावहम् ।
भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करम् ॥ ५
एष चैव गुरुर्धर्मो यं प्रवक्षाम्यहं तव ।
अर्थश्च तव धर्मश्च भूयानत्र प्रदृश्यते ॥ ६
यदर्थमिष्यते भार्या प्राप्तः सोऽर्थस्त्वया मयि ।
कन्या चैव कुमारश्च कृताहमनृणा त्वया ॥ ७
समर्थः पोषणे चासि सुतयो रक्षणे तथा ।
न त्वहं सुतयोः शक्ता तथा रक्षणपोषणे ॥ ८
मम हि त्वद्विहीनायाः सर्वकामा न आपदः ।
कथं स्यातां सुतौ बालौ भवेयं च कथं त्वहम् ॥ ९
कथं हि विधवानाथा बालपुत्रा विना त्वया ।
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि ॥ १०
अहंकृतावलिप्तैश्च प्रार्थ्यमानामिमां सुताम् ।

## 146

1 S om उवाच. — d) K3 दैन्यस्य च तव प्रभो; K5 तव अद्यैव वि°; T G विशेषात्पुरुषस्य ह (T1 G3 °षं भोः G5 6 °स्य हि).

2 a) D2 इव; G3 इति; M सह (for इह). D2 M बांधवै. (for मान°). — c) B1 6 अवश्यंभा°. Ś1 K (except K2) N1 D5 °न्यर्थेस्मिन्; T G °श्यकरणीये(G6 °या)र्थे (G2 °श्यं करणीयेर्थे; G3 °श्यं करणीयार्थे); M °श्यभाविते(M3 °भापिके)र्थे वै. — d) Ś1 K1.3 हि; G6 एव (for इह). B6 वर्तते (for विद्य°).

3 a) S च (for अथ). — b) K1 °र्थे विद्यते. — c) K (except K1) Ñ3 Da D2 स्वबु°. T G3–6 °थां च जहि बु°; M °थां जहिहि सु°. — d) K4 G1 M3.5 अहं (for स्वयं). Ñ2 V1 Dn D1 च; G2 सः (for वै).

4 a) Da1 M6–8 नार्यां; G4 न्यार्यं. D5 एतदेव वरं ना°. — b) G1 परं (for कार्यं) Ñ1 सदा भवेत् (for सना°). G1 लोके यश° सनातन°. — d) Ś1 K1 या (for यद्). K4 Dn1 D2.3 यद्भर्तुर्हित°; S भर्तुर्हि हित°.

5 a) Ko D5 T1 G3 M6–8 transp तच्च and तत्र. D4 तच्च (for तत्र). Ś1 transp. तत्र and कर्म. B6 हितं (for कृतं). — b) V1 Dn D1 इदं; T1 G1–3 च; M6 हि (for इह). — d) G3 transp. लोके and अस्मिन्, and om. च.

6 a) Ko D1.3 एष वै गुरुधर्मोयं. — b) G2 सं (for यं). T2 G1–3 M (except M1) पुनः (for तव). — c) D5 चेत् (for the first च). Ñ3 पुत्र° (for धर्मः). — d) K2 भूयांस्तत्र प्रपद्यते; D5 भूयो नात्र प्रवर्त°; T1 भूयादत्र प्रशस्°.

7 a) D2 इह ते (for इष्य°). — b) Ś1 K2 transp. प्राप्तः and सोऽर्थ°. D5 अपि; G3 मम (for मयि). — c) G6 transp. कन्या and कुमार°. B D (except D5) एका (for एव). — d) B1 8 °हमपि चानृणा.

8 a) Ś1 सुतार्थः; K2 स्वशक्त°. G1 तोषणे. Ś1 B5 Da2 D4 S (except T1) चापि; K2 चैव. — b) G3 सुतापा. M °योरन्ववेक्षणे. — cd) K3 चैव (for शक्ता). Ko तयोः; K3 शक्ता (for तथा). K1 तथा पोषणरक्षणे. G3 नाहं शक्ता तयोर्नाथ रक्षणे पोषणेन्वहं.

9 a) T G अपि (for हि). G3 तव हीना°. — b) Only M3.5 as in text (Is न = इव?). M6–8 सर्वे (for सर्व°). Ś1 Ko.1 3 Ñ1 3 सर्वकामध(Ñ1.3 °मं ज)नेश्वर; K3 °कामैर्धनेन च; K4 Ñ2 V1 B D सर्वप्राणधनेश्वर (D5 °कामा अकामदा); T1 °मानकामद; T2 G °मानमानद. — c) Ko °चोभौ; D5 चैतौ (for बालौ). — d) V1 B (except B5) Dn D2.3 भरेयं; B1m तरे°. K1 B1.6 Da त्वहं. S वृत्ति(G1 वृत्ति)र्वा(M ज्ञा)पि कथं भवेत्.

10 a) Ś1 K2 °था नाम; Ñ1 °था नारी; T1 G1 °था नाथ; T2 G4.6 M3.6–8 °था बाला. M5 अहं कथं हि विधवा. — b) S transp. विना and त्वया. — d) G1.3 लोके (for स्थिता).

11 a) Ś1 K1 अहो (for अहं°). Ñ3 G6 °हं किलाप°; T G1.2 4 °वलेपैश्च; M6–8 °हंकाराव°. — b) Ś1 प्रभो (for सुताम्). — c) K1 3 Ñ1.3 D4 T2 G4–6 M संबंधैः. — G3 om. 11c–13a. — d) Ko D1.4.5 G1 श्रीविष्टु (for रक्षि°)

अयुक्तैस्तव संबन्धे कथं शक्ष्यामि रक्षितुम् ॥ ११
उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः ।
प्रार्थयन्ति जनाः सर्वे वीरहीनां तथा स्त्रियम् ॥ १२
साहं विचाल्यमाना वै प्रार्थ्यमाना दुरात्मभिः ।
स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम ॥ १३
कथं तव कुलस्यैकामिमां बालामसंस्कृताम् ।
पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे ॥ १४
कथं शक्ष्यामि बालेऽस्मिन्गुणानाधातुमीप्सितान् ।
अनाथे सर्वतो लुप्ते यथा त्वं धर्मदर्शिवान् ॥ १५
इमामपि च ते बालामनाथां परिभूय माम् ।
अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा ॥ १६
तां चेदहं न दित्सेयं त्वद्गुणैरुपबृंहिताम् ।
प्रमथ्यैनां हरेयुस्ते हविर्ध्वाङ्क्षा इवाध्वरात् ॥ १७
संप्रेक्षमाणा पुत्रं ते नानुरूपमिवात्मनः ।
अनर्हवशमापन्नामिमां चापि सुतां तव ॥ १८
अवज्ञाता च लोकस्य तथात्मानमजानती ।
अवलिप्तैर्नरैर्ब्रह्मन्मरिष्यामि न संशयः ॥ १९
तौ विहीनौ मया बालौ त्वया चैव ममात्मजौ ।
विनश्येतां न संदेहो मत्स्याविव जलक्षये ॥ २०
त्रितयं सर्वथाप्येवं विनशिष्यत्यसंशयम् । C. 1. 6168 B. 1. 158. 21 K. 1. 172. 24

---

12 Ś1 K1 om. 12–14; G6 om. 12 (cf. v. l. 11). — c) K0.4 D2.5 नराः; K2 Ñ1.2 B3 G2 तथा (for जनाः). G2 हीनां (for सर्वे). — d) K0 V1 B6 Dn D1.8 G3 पतिहीनां. K2 Ñ1.2 नराः (for तथा).

13 Ś1 K1 om. 13; G6 om. 13a (cf. v. l. 11, 12). — a) K0 एवं; D3 अपि; G4 हि; M तु (for वै). G1.3 °हं विचार्य चारमानं. — b) M क्लिश्यमाना. — d) K3 D1 सज्जनानां; Da G3 °नेषु; D5 °नोक्ते. K3 कथंचन (for द्विजो°). G1.3 सज्जनस्त्रीनिषेविते. — After 13, G1.2.4 ins.:

1606* स्त्रीजन्म गर्हितं नाथ लोके दुष्टजनाकुले ।
मातापित्रोर्वशे कन्या ऊढा भर्तृवशे तथा ।
अभावे चानयोः पुत्रे स्वतन्त्रा स्त्री विगर्ह्यते ।
अनाथत्वं स्त्रियो द्वारं दुष्टानां विवृतं हि तत् ।
वस्त्रखण्डं घृताक्तं हि यथा संकृष्यते श्वभिः । [5]
दृष्ट्वा तथाबला नाथ प्रार्थितैश्वर्यगर्वितैः ।

14 Ś1 K1 om. 14 (cf. v. l. 12). — ab) M सुतां च (for कुलस्य). K (K1 om.) Ñ3 M transp. एकां and इमां. K2.3 Ñ3 असत्कृतां; Ñ1 सुसत्कृतां; Ñ2 V1 B1m.6 D (except D1.3.5) अनागसं; B1 अलंकृतां. T G कथं (G2 अहं) तव सुतं चेममेकं बालमसंस्कृतं. — d) S नियंतुं (for नियोक्तुं).

15 b) Ñ1 °णान्दातुमभीप्सि°. — d) S °दर्शनः (T3 G1.2.4 °न; G5 °ने). — After 15, G1(partly mutilated) 2.4 ins.:

1607* आद्वादशाब्दं बालोऽयं दुश्चरित्रं चचार ह ।
मातापित्रोस्तु तत्पापमित्याहुर्धर्मवादिनः ।
शिक्षये तत्पिता माता सत्पुत्रश्च चरित्रतः ।

16 a) S सुतां (T1 सतीं) (for इमां). Ś1 T1 मे (for ते). — b) T2 M5 तां (for माम्). — c) K3 °श्रुतीम्; Ñ1 °श्रुतीर्; Ñ3 °स्मृतीम्. K0.3 N1.3 D5 इव (for यथा).

17 a) K0 तु दातुं; K4 T1 चेदिह (for चेदहं). Ś1 K1 हिंसेयं. D5 तां दातुं यदि नेच्छेयं. — b) D5 G1.3 M सद्गुणैर्. — c) B3m प्रमाथ्य मां; G1 °थ्य मां; G2 °थ्यैमां. — After 17abc, G2.4 ins.:

1608* कोऽस्याः कर्ता भवेदिति ।
पश्यन्त्या मे हरन्त्येव क्रोशन्त्याश्चापि निष्कृपाः ।
अनाथत्वात्सुतां विद्वन्.

— d) K0.1 S °ध्वरे.

18 a) Ś1 K (except K3) B6 Da D2.4 T1 G2 संप्रेक्ष्यमाणा (T1 °णां); Ñ3 D5 G5.6 °णाः; G1.3.4 °णां. Ñ3 पुत्रास्; S पुत्रीं. — b) Ñ3 °रूप; G3–6 M °रूपा. G1.3 ह्रीयमाणां दुरात्मभिः. — c) Ñ3 असमर्थवश°. — d) For it, G1.3 subst. 19d, repeating the pāda in its proper place.

19 T G om. 19ab. — a) Ñ2 V1 B D लोकेषु. Ś1 K1 अज्ञाता सर्वलोक°. — b) B3 अजानतां; Da °नता; M6–8 अरक्षती. — c) G1 अकुलीनैर्; M6.5 अभिमृष्टा. T G दृष्ट्वा (for ब्रह्मन्). M6–8 अवश्यमवशा म°. — After 19abc, G1.3 ins.:

1609* ह्रीयमाणामनागसाः ।
अशक्तत्वादनाथत्वात्.

After 19, T2 G6 ins.:

1610* मृते त्वयि मयावश्यं सहागमनमिष्यते ।
मृते भर्तरि नारीणां सुखलेशं न विद्यते ।

20 ab) T1 द्वौ (for तौ). Ñ2 V1 B D (except D3 5) च (for वि-). T1 यथा (for त्वया). K4 वापि (for चैव). K1 तव; Ñ3 B D (except D5) T2 G3.4.6 तथा (for मम). G2 त्वया चेमौ मया हीनौ बालावेतौ त्वदात्म°.

21 24 त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि ॥ २१
व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परा गतिः ।
न तु ब्राह्मण पुत्राणां विषये परिवर्तितुम् ॥ २२
परित्यक्तः सुतश्चायं दुहितेयं तथा मया ।
बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितं च मे ॥ २३
यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा ।
विशिष्यते स्त्रिया भर्तुर्नित्यं प्रियहिते स्थितिः ॥२४
तदिदं यच्चिकीर्षामि धर्म्यं परमसंमतम् ।
इष्टं चैव हितं चैव तव चैव कुलस्य च ॥ २५
इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः ।
आपद्धर्मविमोक्षाय भार्या चापि सतां मतम् ॥
एकतो वा कुलं कृत्स्नमात्मा वा कुलवर्धन ।
न समं सर्वमेवेति बुधानामेष निश्चयः ॥ २७
स कुरुष्व मया कार्यं तारयात्मानमात्मना ।
अनुजानीहि मामार्य सुतौ मे परिरक्ष च ॥ २
अवध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये ।

---

21 a) S °या सर्वं ($G_5$ ब्रह्मन्). — b) $K_2$ $D_5$ $T_2$ $G_{1.2.6}$ °शयः. — c) $T_2$ त्वां; $G_{4-6}$ मा; $M_{3.5}$ मां (for त्वं). — d) $T_2$ $G_{4-6}$ $M_{3.5}$ परित्यक्तुं त्वमर्हं°.

22 a) $Ś_1$ बुद्धिर्ह्येषा; $D_5$ इष्टा ह्येषा. S इष्टा ह्येषा कुलस्त्रीणां. Cd cites व्युष्टिः (as in text). — b) $K_4$ transp. पूर्वं and भर्तुः. $K_{0.2.3}$ Ñ $V_1$ B D $M_7$ परां गतिं. — c) N (except $K_1$; for $D_5$ see below) गंतुं (for न तु). K (except $K_1$) $Ñ_3$ $B_{1.6}$ Arjp ब्रह्मन्न-; $Ñ_{1.2}$ $V_1$ $B_{3.5}$ D (for $D_5$ see below) ब्रह्मन्स- (for ब्राह्मण). $D_5$ S अनिष्टमिह पुत्रा°. — d) $Ñ_2$ $V_1$ B D (except $D_5$) इति धर्मविदो विदुः. — After 22, $G_{1.2.4}$ ins.:

1611* हरिद्राञ्जनपुष्पादिसौमङ्गल्ययुता सती ।
मरणं याति या भर्तुस्तद्दत्तजलपायिनी ।
भर्तृपादार्पितमनाः सा याति गिरिजापदम् ।
गिरिजायाः सखी भूत्वा मोदते नगकन्यया ।

S ins. after 22 ($G_{1.2.4}$, after 1611*):

1612* मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं का पतिं नाभिनन्दति ।

[ (L. 1) $G_6$ माता (for भ्राता). — (L. 2) $T_1$ M प्र- (for हि). M भर्तारं का न पूजयेत् (for the posterior half). ]

23 a) S एव (for अयं). — b) $G_3$ च (for इयं). — c) $Ś_1$ $N_1$ सदा; $Ñ_2$ यथा. $Ś_1$ दुहित्री भीतया तथा. — d) $K_1$ त्वत्कृते. $Ś_1$ $K_1$ $Ñ_1$ मम (for परित्यक्तास्. — d) ... च मे).

24 b) $Ñ_1$ व्रतैः (for दानैः). — c) $G_3$ भक्त्या (for भर्तुर्). — d) $K_0$ °हिते रता; $T_1$ °हितेप्सया; $T_2$ $G_{1.4-6}$ °हितेप्सुता; $G_3$ °हितेप्सिता; $G_2$ च प्रियलिप्सुता. — After 24, $T_1$ M (except $M_5$) ins.:

1613* आश्रमाश्राग्निसंस्कारा जपहोमव्रतानि च ।
स्त्रीणां नैते विधातव्या विना पतिमनिन्दितम् ।
क्षमा शौचमनाहारमेतावद्विहितं स्त्रियाः ।

25 a) $D_{2.4}$ अहं (for इदं). — b) $K_4$ $Ñ_{2.3}$ $V_2$ $T_1$ $G_{1-3}$ $M_{6-8}$ धर्मं. $Ś_1$ $K_1$ °संस्कृतं; $Ñ_1$ °संमितं; °संभृतं; $T_2$ $G_6$ °कं मतं; $G_{4.5}$ °कर्म तव; M °कं ... — c) $K_4$ च वि- (for the first चैव). $K_0$ $D_5$ इष्टं प्रभो ह्येतत्. — d) $T_1$ तवास्यैव.

26 a) $Ś_1$ $B_1$ एव (for अपि). — b) $Ś_1$ तदा; K... तथा; $D_5$ श्रियः; $M_3$ (sup. lin. as in text).$_{6-8}$ च ये ( ... प्रियाः). — c) $K_0$ Ñ $V_1$ B (except $B_3$) D (exc... $D_5$) T G $M_8$ °प्रमोक्षा°. — d) $K_{0.1}$ $D_5$ चापि; $B_1$ $G_1$ ... चैव ($B_1$m चेति). $Ñ_{1.3}$ $B_3$ $D_{2.4}$ M °तां मता; $T_1$ ... सबांधवाः; $T_2$ $G_{4.5}$ मनस्विनी; $G_6$ महात्मनः. — After 26, $K_{0.3.4}$ $Ñ_1$ $V_1$ Dn $D_{1.2}$ (om. line 2).$_{4.5}$ ins.:

1614* आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ।
दृष्टादृष्टफलार्थं हि भार्या पुत्रो धनं गृहम् ।
सर्वमेतद्विधातव्यं बुधानामेष निश्चयः ।

[ (L. 1-2) = (var.) Manu 7. 213 (v. l. आपदर्थं). ]

27 $K_0$ om. 27. — a) $T_1$ एकं तव; M एकेन ... $M_{3.5}$ सर्वं (for कृत्स्नं). — b) M आत्मना (for आत्मा व ...) $K_{1.2}$ °नंदन; $K_{3.4}$ $Ñ_{1.2}$ $V_1$ B Da $D_3$ $T_1$ $G_{3-6}$ °वर्धन ... $T_2$ °धर्मतः. $G_{1.2}$ आत्मा चैवैकतस्तथा. — $G_1$ (part mutilated).$_2$ (which both om. 27$^{cd}$) ins. after 27... $G_4$, after 27:

1615* उभयोः कोऽधिको विद्वन्नात्मा चैवाधिकः कुलात् ...
आत्मनो विद्यमानत्वाद्भुवनानि चतुर्दश ।
विद्यन्ते द्विजशार्दूल आत्मा रक्ष्यः सदा त्वया ।
आत्मन्यविद्यमाने चेत्तस्य नास्तीह किंचन ।
एतस्मादिदं सर्वमात्मना न समं स्थितम् ।

— $G_{1.2}$ om. 27$^{cd}$. — c) $Ś_1$ पूर्वमे°; $K_{3.4}$ सर्वमेतद्वि; ... °मेवैतद्; $D_5$ °मेतद्वि-. — After 27, $G_4$ ins. 1615*.

28 b) $Ś_1$ पुत्रं; $K_1$ पुत्री; $G_4$ सुता (for सुतौ). T G ... ते; M च (for मे). $G_{1.2.4}$ त्वं सुतौ (for सुतौ मे).

धर्मज्ञान्राक्षसानाहुर्न हन्यात्स च मामपि ॥ २९
निःसंशयो वधः पुंसां स्त्रीणां संशयितो वधः ।
अतो मामेव धर्मज्ञ प्रस्थापयितुमर्हसि ॥ ३०
भुक्तं प्रियाण्यवाप्तानि धर्मश्च चरितो मया ।
त्वत्प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितम् ॥
जातपुत्रा च वृद्धा च प्रियकामा च ते सदा ।
समीक्ष्यैतदहं सर्वं व्यवसायं करोम्यतः ॥ ३२
उत्सृज्यापि च मामार्य वेत्स्यस्यन्यामपि स्त्रियम् ।
ततः प्रतिष्ठितो धर्मो भविष्यति पुनस्तव ॥ ३३
न चाप्यधर्मः कल्याण बहुपत्नीकता नृणाम् ।
स्त्रीणामधर्मः सुमहान्भर्तुः पूर्वस्य लङ्घने ॥ ३४
एतत्सर्वं समीक्ष्य त्वमात्मत्यागं च गर्हितम् ।
आत्मानं तारय मया कुलं चेमौ च दारकौ ॥ ३५
वैशंपायन उवाच ।
एवमुक्तस्तया भर्ता तां समालिङ्ग्य भारत ।
मुमोच बाष्पं शनकैः सभार्यो भृशदुःखितः ॥ ३६ C. 1. 6160 B. 1. 158. 20 K. 1. 172. 48

इति श्रीमहाभारते आदिपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

---

K3 Ñ2 V1 B D (except D5) °पालय; Ñ3 °रक्षय; S °रक्ष मे (T G3.6 °क्ष वै; G3 °क्षणैः). — After 28, G1.2.4 ins.:

1616* किं चान्यच्छृणु मे नाथ यद्वक्ष्यामि हितं तव ।
श्रुत्वावधार्यतां तन्मे ततस्ते तद्धितं कुरु ।

29 a) N (except Ñ3 B1 D3.4) अवध्यां. Ś1 K1 प्रियम्; K0.2-4 Ñ1.2 V1 B3.6 D (except D3.4) G1.2 स्त्रियम्. Ñ1 B6 Da अपि (for इति). — b) K1 प्रिय° (for the second धर्म°). — c) K0.3.4 Ñ3 D5 °क्षसांश्चाहुर्. — d) K0 D3 इति (for अपि). Ś1 K1 °न्यात्कुलमापदि; K4 °न्यात्सोथ मा°. G1.2 तत्र हन्यात्स मा°.

30 a) V1 B (except B1) Dn D1.4.5 °संशयं; M6-8 न संश°. — b) M वधः स्त्रीणां स (M6-8 च) संशयः.

31 a) G2 शुभं (for भुक्तं). — b) Ś1 K1-3 Ñ V1 B5 D (except D2.5) महान् (for मया). G2 धर्मश्चोपार्जितो मया. — After 31ab, G1.2.4 ins.:

1617* त्वच्छुश्रूषणसंभूता कीर्तिश्चाप्यतुला मम ।

— c) D5 मत्प्र°. G2.3 °सूताः प्रियाः प्रासं. — d) Ś1 K1 Ñ Cd °प्स्यति जीवितं; K0.2 °ति वै मृतं; K3 °ति मारणं; K4 D5 °ति जीवितुं. T1 मा तप्येप्यद्य जीवितुं; T2 G3-6 आतप्स्ये त्यज्य जी°; G1.2 आतप्स्ये जीवितं त्यजे; M3.5 तस्मात्त्यक्ष्यामि जी°; M6-8 मामेव त्यजतामतः.

32 G6 om. 32ab. — a) Ś1 K3 विवृद्धा; K1 प्रवृ°. — c) Ñ3 Da S तद् (for एतद्). — d) Ś1 अहं; S च (M3 वः; M5 वै) (for अतः).

33 a) K4 T1 G1-3 transp. अपि and च. D5 अद्य (for अपि). D5 अपि; Ñ3 V1 B Da Dn D1.2.4 हि (for च). — b) Ñ2 V1 B Dn D1.2.4 प्राप्स्यसि; Cd as in text. Ś1 T1 M7 प्रियां (for स्त्रियम्). G2 स्त्रियमन्यां यदीच्छसि; G3 वेत्स्यन्यामपि च स्त्रि°. — G1.2 (which latter om. 33cd) ins. after 33ab: G4, after 33:

1618* लभस्व कुलजां कन्यां धर्मस्ते भविता पुनः ।
अनाश्रमी न तिष्ठेत क्षणमात्रमपि द्विजः ।

— d) Ñ1 पुनः (for तव).

34 b) Ñ V1 D G3.4 °पत्नीकृतां (D5 °तं); T1 M3.5 °कृतो; M6-8 °कृते. — c) Ś1 स्वधर्मः; K1-3 Ñ1.2 G6 M स्वधर्मः. G1.2 कल्याण (for सुमहान्). — d) K0.1 T G3-6 लंघनं. G1.2 बहुभर्तृकता तथा.

35 b) Ñ1 व्यवसायं करोम्यतः. — After 35ab, K4 ins.:

1619* कुरु वाक्यं मम विभो नान्यथा मानसं कुरु ।

— c) Da आत्मार्थं. Ñ3 V1 B Dn D1.2.4 तारयाद्याशु; Da °यत्याशु; T G °य मद्यन्. — d) K0 Ñ1.2 T1 G2 मम च; D5 T2 G3-6 च मम; G1 धर्मं च (for चेमौ च). D5 दारकैः; G5 °रकं.

36 Ś1 K (except K4) Ñ3 G4 om. वैशं° उ°; D2.5 S om. उवाच. — a) G2 तथा; G5 तदा (for तया). — After 36, K4 ins.:

1620* ततोऽनन्तरमेवास्य दुहिता वक्तुमुद्यता ।;

while D5 T1 M ins.:

1621* मैवं वद सुकल्याणि तिष्ठ गेहे सुमध्यमे ।
न त्वां भार्यां त्यजेत्प्राज्ञः पुत्रान्वापि कदाचन ।
विशेषतः स्त्रियं रक्षेत्पुरुषो बुद्धिमानिह ।
त्यक्त्वा तु पुरुषो जीवेन्न ह्यात्म्यानिमान्सदा ।
न वेत्ति धर्ममर्थं च कामं मोक्षं च तत्त्वतः ।

[ Before line 1, D5 ins. ब्राह्मण उ°. — (L. 1) D5 -स्व; T1 त्वं (for सु-). T1 चेह (for गेहे). — (L. 2) D5 T1 तु (for त्वां). D5 पुत्रवंतीमनुव्रतां. — (L. 5) D5 धर्मकामौ स. D5 न मां मुंचेत तत्त्वतः (for the posterior half). ]

— Thereafter, D5 ins. a passage of 28 lines given in App. I (No. 90).

हिंसतां हि वधः शीघ्रमेवमेव भवेदिति ॥ ३
तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत ।
एवमस्त्विति तं प्राहुर्जगृहुः समयं च तम् ॥ ४
ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत ।
नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः ॥ ५
ततो भीमस्तमादाय गतासुं पुरुषादकम् ।
द्वारदेशे विनिक्षिप्य जगामानुपलक्षितः ॥ ६
ततः स भीमस्तं हत्वा गत्वा ब्राह्मणवेश्म तत् ।
आचचक्षे यथावृत्तं राज्ञः सर्वमशेषतः ॥ ७
ततो नरा विनिष्क्रान्ता नगरात्काल्यमेव तु ।
ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितम् ॥ ८
तमद्रिकूटसदृशं विनिकीर्णं भयावहम् ।
एकचक्रां ततो गत्वा प्रवृत्तिं प्रददुः पुरे ॥ ९
ततः सहस्रशो राजन्नरा नगरवासिनः ।
तत्राजग्मुर्बकं द्रष्टुं सस्त्रीवृद्धकुमारकाः ॥ १०
ततस्ते विस्मिताः सर्वे कर्म दृष्ट्वातिमानुषम् ।

---

$T_1$ अपि; $G_{1.2}$ स (for च). $D_5$ M समयं च न्य($D_5$ ॰नि)वेदयत्.

3 $^a$) $M_{6-8}$ भूमौ (*for* भूयो). — $^b$) $K_2$ अभि; $V_1$ B D इति (for इह). — $^c$) $Ś_1$ S च (for हि). $K_1$ गतिः शीघ्रं. — $^d$) $K_2$ $D_5$ S भविष्यति (for भवे°).

4 Before 4, $T_2$ $G_{4-6}$ $M_{6-8}$ ins. वैशं°. — $K_1$ (hapl.) om. $4^c$–$5^b$. — $^c$) $D_n$ $G_6$ संप्राहुः; $G_4$ तं चाहुः. $T_1$ $G_{1-3}$ एवमेवास्त्विति प्राहुः ($G_{1.2}$ प्रोच्चवा). — $^d$) $G_{1.2}$ गृहीत्वा; $G_{4.5}$ जजल्पुः (for जगृ°). $M_{6-8}$ तत् (for तम्). $G_3$ समयं जगृहुः (by transp.). — After 4, S ins.:

1660* सगणस्तु बकभ्राता प्राणमत्पाण्डवं तदा ।

[ $G_{1.2.4}$ भीमसेनं प्रणम्य च; M प्रणिपत्य च पांडवं (for the posterior half). ]

— Before 1660*, $G_{1.2.4}$ ins.:

1661* तत्पुरोपवनोद्यानचैत्यारामान्विसृज्य ते ।
विभीतककपित्थार्कप्लक्षशाल्मलिकाननम् ।
प्रपेदिरे भयत्रस्ता भीमसाध्वसकातराः ।

(cf. 1659*); and after 1660* they ins.:

1662* यमुनातीरमुत्सृज्य प्रपेदे पितृकाननम् ।

5 $K_1$ om. $5^{ab}$ (cf. v. l. 4). — $^a$) $Ñ_1$ तानि (for तत्र). — $^c$) $K_1$ प्रतिद°. — $^d$) T G यथा (*$G_{1.2}$* तथा) नगरवासिनः.

6 After $6^{ab}$, S (*$G_{1.2}$ om. lines 3–4*) *ins.:*

1663* निष्कर्णनेत्रं निर्जिह्वं निःसंज्ञं कण्ठपीडनात् ।
कुर्वन्तं बहुधा चेष्टां स भरादमकर्पत ।
स एव राक्षसो नूनं पुनरायाति नः पुरीम् ।
सयालवृद्धाः पुरुषा इति भीताः प्रदुद्रुवुः ।

[ (L. 1) $T_1$ निष्कीर्णनेत्रं; $G_3$ विकीर्ण°. $G_{1.2}$ कर्णपीड°; $G_3$ करपीड°. — (L. 2) $T_1$ $G_1$ चेष्टाः. $T_1$ M पुरद्वारं समकर्षत. — After line 2, $G_{2.4}$ ins.:

1664* आच्छिद्य बाहू पादौ च शिरश्च स वृकोदरः ।
द्वारेषु चतुर्षु क्षिप्त्वा पुनरागात्स मारुतिः ।

— (L. 3) $T_1$ $G_3$ पुरं. — (L. 4) $G_3$ इति मत्वा. ]

— $^d$) S नगरस्य जगाम तं ($G_3$ M ह). — After 6, N *ins.:*

1665* दृष्ट्वा भीमबलोद्धूतं बकं विनिहतं तदा ।
ज्ञातयोऽस्य भयोद्विग्नाः प्रतिजग्मुस्ततस्ततः ।

7 $^a$) $K_{0.2.4}$ तु; $K_1$ स्म (for स). $Ñ_3$ तद्धत्वा. $G_3$ ततो भीमो बकं हत्वा. — $^b$) $K_2$ °वेश्मनि; $G_3$ °वेश्मसु. — After $7^{ab}$, $D_5$ T G ins.:

1666* बलीवर्दौ च शकटं ब्राह्मणाय न्यवेदयत् ।

[ $T_2$ $G_{4-6}$ सशकटं. $G_3$ निवेद्य च (for न्यवेद°). ]

$G_{1.2.4}$ cont.:

1667* तूष्णीमन्तर्गृहं गच्छेत्यभिधाय द्विजोत्तमम् ।
मातृभ्रातृसमक्षं च गत्वा शयनमेत्य च ।

— $^c$) S च ततस्सर्वं (for यथा°). — $^d$) *$Ś_1$* $K_{1.3}$ राज्ञे; $K_{0.2.4}$ राजन्. S राज्ञौ (M राज्ञे) युद्धमभूद्यथा. — After 7, $G_{2.4}$ ins.:

1668* अक्षितोऽस्म्यद्य जननि हतिर्मे दशवार्षिकी ।

8 $^a$) $G_{1.2}$ केचिन्नरा. S (*except $M_8$*) विनिष्क्रम्य. — $^b$) *Some MSS.* कल्यम्; *Cd as in text.* $K_{0.4}$ $Ñ_{1.2}$ *$D_5$* तं; $K_2$ च (*for* तु). — $^c$) $K_{0-3}$ निहितं. $Ś_1$ $K_1$ तं तु; $K_{0.2.4}$ $D_5$ तत्र (for भूमौ). — $^d$) $Ś_1$ K (except $K_3$) $D_5$ घोरदर्शनं (for रुधिरो°).

9 $^a$) S °प्रतिमं. — $^b$) $Ñ_2$ $V_1$ B D (except $D_5$) $T_1$ भयानकं. — After $9^{ab}$, $K_4$ $Ñ_{1.2}$ $V_1$ B D ins.:

1669* दृष्ट्वा संहृष्टरोमाणो बभूवुस्तत्र नागराः ।

— $^c$) S पुनर् (for ततो). — $^d$) T G अददुः. $Ś_1$ K• • $G_{3.6}$ $M_8$ परे (for पुरे).

10 $^a$) $D_1$ सहस्रशस्तदा राजन्. — $^b$) *$G_3$* नानाजना — $^c$) $K_3$ तत्र गच्छन्; $D_n$ ततो जग्मुः; *$D_5$ $T_1$ $G_{1.2.4}$* त जग्मुः. — $^d$) $G_3$ सस्त्रीका वृद्धबालकाः. — After 1 *$G_{2.4}$ ins.:*

1670* ददृशुस्ते बकं सर्वे विस्मितास्तं गिरोपमम् ।

दैवतान्यर्चयांचक्रुः सर्वे एव विशां पते ॥ ११
ततः प्रगणयामासुः कस्य वारोऽद्य भोजने ।
ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्व एव तत् ॥१२
एवं पृष्टस्तु बहुशो रक्षमाणश्च पाण्डवान् ।
उवाच नागरान्सर्वानिदं विप्रर्षभस्तदा ॥ १३
आज्ञापितं मामशने रुदन्तं सह बन्धुभिः ।
ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महाबलः ॥ १४
परिपृच्छ्य स मां पूर्वं परिक्लेशं पुरस्य च ।
अब्रवीद्ब्राह्मणश्रेष्ठ आश्वास्य प्रहसन्निव ॥ १५
प्रापयिष्याम्यहं तस्मै इदमन्नं दुरात्मने ।
मन्निमित्तं भयं चापि न कार्यमिति वीर्यवान् ॥१६
स तदन्नमुपादाय गतो बकवनं प्रति ।
तेन नूनं भवेदेतत्कर्म लोकहितं कृतम् ॥ १७
ततस्ते ब्राह्मणाः सर्वे क्षत्रियाश्च सुविस्मिताः ।
वैश्याः शूद्राश्च मुदिताश्चक्रुर्ब्रह्ममहं तदा ॥ १८
ततो जानपदाः सर्वे आजग्मुर्नगरं प्रति ।
तदद्भुततमं द्रष्टुं पार्थास्तत्रैव चावसन् ॥ १९　C. 1. 6315 B. 1. 164. 2 K. 1. 178. 2

इति श्रीमहाभारते आदिपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥ समाप्तं बकवधपर्व ॥

---

निःशृङ्गवृक्षं निर्गुल्मं विनिकीर्णं गिरिं यथा ।

11 After 11$^{ab}$, G2.4 ins.:

1671* विस्मयोत्फुल्लनयनास्तर्जन्यासक्तनासिकाः ।

— $^{c}$) S अर्चयामासुः. — $^{d}$) B1 T G M5 सर्वाण्येव विशां पते (G2 प्रार्थनानि पुरा भयात्).

12 M6-8 om. 12$^{ab}$. — $^{a}$) Ko.3 M8 परिणयामासुः; K2.4 Ñ1 M8 ते गणया°; D5 चागणया°; T G परीक्षया°. — $^{b}$) G2 रक्षसः (for भोज°). — $^{d}$) K (except K1) D5 T G सर्वमेव. Ñ V1 B D (except D5) ते (for तत्).

13 $^{a}$) Ñ1 सु-; Ñ2.3 V1 B D स (for तु). S पृच्छ्यमानो (M एवं पृष्टो) बहुविधं (T1 -थ विविधं). — $^{b}$) Ś1 K तु; M स (for च). — $^{c}$) M इति (for इदं). Ko.3.4 इदं ब्राह्मणसत्तमः; T G काश्यपो नामत(T1 गौतम)स्तदा.

14 Before 14, T G ins. ब्राह्मणः. — After ब्राह्मणः, G3 ins.:

1672* अद्य ते राक्षसो वारः पूर्वमुद्घोषितो मम ।
　　ग्रामसाधारणेनैव सूचकेन पुरौकसः ।

— $^{a}$) Ś1 K2.4 Ñ3 मामशनं; Ko च मापन्नं; K3 च मामार्तं; S मामनिशं. — $^{b}$) G1.2 बंधुभिः सह (by transp.); M3.5 सह बांधवैः. — $^{d}$) G3 मंत्रशिक्षा-. Ñ2 V1 B D (except D5) महामनाः.

15 $^{a}$) Ś1 Ko.1 परिदृष्ट्वा; K3.4 Ñ1.3 D5 °पृष्ट्वा. K1 मां पूर्वं. M3.5 परिपृष्ट्वा च सर्वं मां. — Ñ1 om. 15$^{c}$-16$^{a}$. — $^{d}$) N विश्वास्य प्रहस°; G1 समाश्वास्य हस°.

16 Ñ1 om. 16 (cf. v. l. 15). — $^{a}$) K2.4 Ñ3 T1 G (except G3) तस्माद्. — $^{b}$) Ñ2 V1 B D (except D5) अन्नमेतद्. Ko दुरात्मनः. — $^{c}$) S तन्निमित्तं. T1 इदं; G1 भयात् (for भयं). K (except K1) चात्र (for चापि). — $^{d}$) Ñ1.2 V1 B D (except D5) °ति चाब्रवीत्.

18 G2 transp. 18 and 19. — $^{a}$) T1 M (except M5) तु (for ते). M (except M5) चैव (for सर्वे). — $^{b}$) Ko.4 क्षत्रियाश्चैव वि°. — $^{c}$) Ś1 त्रिदि°; K1 विहि° (for मुदि°). — $^{d}$) Ś1 Ko.2.3 ब्राह्म-; D5 G3 ब्राह्मयं. Ś1 K1 -महस्तदा; D2.5 -महोत्सवं; T G M5 -महत्तदा.

19 G2 transp. 18 and 19; Ko transp. 19$^{ab}$ and 19$^{cd}$. — $^{a}$) Ś1 K4 B (except B3) Dn1.n3 D1.4 G1 M6-8 जनपदाः. — $^{b}$) Before आजग्मुः, Ś1 Ko.1 ins. हि; K3 अपि; T2 G1.5.6 च; G3 तु (to avoid hiatus!). M5 तत्पुरं (for नगरं). G2 M3.6.7 आजगाम (G2 समाजग्मुः) पुरं प्रति. — $^{c}$) T1 G1.2.4 M5 तम् (for तद्). D5 G3 तदद्भुतमिमं. N M5 दृष्ट्वा. — $^{d}$) S चाभवन्. — After 19, K2.4 ins. (the *phalas'ruti*):

1673* श्रुत्वा बकवधं यस्तु वाचकं पूजयेन्नरः ।
　　तस्य वंशेऽपि राजेन्द्र न राक्षसभयं भवेत् ।
　　नश्यन्ति शत्रवस्तस्य उपसर्गास्तथैव च ।
　　महत्पुण्यमवाप्नोति श्रुत्वा भीमपराक्रमम् ।;

while S (except T2 G3) ins.:

1674* वेत्रकीयगृहे सर्वे परिवार्य वृकोदरम् ।
　　विस्मयादभ्यगच्छन्त भीमं भीमपराक्रमम् ।
　　न वै न संभवेत्सर्वं ब्राह्मणेषु महात्मसु ।
　　इति सत्कृत्य तं पौराः परिवव्रुः समन्ततः ।
　　अयं त्राता हि नः सर्वान्पितेव परमार्थतः ।　[5]
　　अस्य शुश्रूषवः पादौ परिचर्य उपास्महे ।
　　पशुमद्दधिमच्चान्नं परं भक्ष्यमुपाहरन् ।
　　तस्मिन्हते ते पुरुषा भीताः समनुबोधनाः ।

# १५२

जनमेजय उवाच ।
ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसम् ।
अत ऊर्ध्वं ततो ब्रह्मन्किमकुर्वत पाण्डवाः ॥ १

वैशंपायन उवाच ।
तत्रैव न्यवसन्राजन्निहत्य बकराक्षसम् ।
अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने ॥ २
ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः ।
प्रतिश्रयार्थं तद्वेश्म ब्राह्मणस्याजगाम ह ॥ ३
स सम्यक्पूजयित्वा तं विद्वान्विप्रर्षभस्तदा ।
ददौ प्रतिश्रयं तस्मै सदा सर्वातिथिव्रती ॥ ४
ततस्ते पाण्डवाः सर्वे सह कुन्त्या नरर्षभाः ।
उपासांचक्रिरे विप्रं कथयानं कथास्तदा ॥ ५
कथयामास देशान्स तीर्थानि विविधानि च ।
राज्ञां च विविधाश्चर्याः पुराणि विविधानि च ॥ ६

---

ततः संप्राद्रवन्पार्थाः सह मात्रा परंतपाः ।
आगच्छन्नेकचक्रां ते पाण्डवाः संशितव्रताः ।
वैदिकाध्ययने युक्ता जटिला ब्रह्मचारिणः ।
अवसंस्ते च तत्रापि ब्राह्मणस्य निवेशने ।
मात्रा सहैकचक्रायां दीर्घकालं सहोषिताः ।

[ (L. 1) M °गृहाः सर्वे. — (L. 3) T2 G1.4.5 इहैव; G3 न चैव (for न वै न). — (L. 5) G1 M3.6–8 परमार्थवित्. — (L. 6) G1.5 परिवार्य; G6 प्रतिवारम्. — (L. 7) G3.6 °न्नं वरं. — (L. 8) T2 G1.4 समबोधयन्; G2 अनुबोधनात्. — With lines 11–12 cf. 1. 153. 2. — (L. 13) G2 °कालं समाहिताः.]

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 Ko–3.4 Ñ V1 *B* *Da* Dn1 n2 D1.2.4.5 T2 M6 बकवध (B1 एकचक्रायां बकवध); to it Ś1 Ko–3.4 Ñ V1 D1 M6 add समाप्त. — *Adhy. name:* Ko.4 D5 ब्राह्मणमहोत्सवः; K6 बकासुरवधः; Ñ1.2 V1 बकवधः. — *Adhy. no.* (figures, words or both): Dn2 (in figures) 163, and (in words) *160*; *D4m* 166; T1 160; T2 G3.6 *M* *112*; *G1.2* *113*; *G5* *110*; G4 111. — *S'loka no.:* Dn 21; M6 27. — *Aggregate s'loka no.:* Dn2 6308.

## 153

1 K1 D5 S om. उवाच. — a) B1 D2 तत्र (B1m as in text); S सदा; Cd तथा (as in text). — K6 T1 (hapl.) om. 1c–2b. — c) N1 अतः परं. T2 G3–6 M सदा महान्; *G1.2* नरव्याघ्राः; *G3* द्विजश्रेष्ठ. — d) Ś1 K (K6 om.) Da D1.4 G1.2 M किमकुर्वत.

2 K6 T1 om. 2ab (cf. v. l. 1). Ś1 *K2.3* *D2.5* *S* om. उवाच. — a) *T2* *G* तत्र ते न्य°. — c) *T2* *G* नरव्याघ्रा (G3 °घ्र) (for परं ब्रह्म). Cd cites ब्रह्म (= वेदः).

3 a) D4 M कतिपयाहस्तु; T G कदाचित्काले तु. — b) Ko.3–4 Dn (erroneously) D3 N1lp शंसित°; K1 N3 संश्रित°. G1 ब्राह्मणाः संशितव्रताः; G3 ब्राह्मणस्य यतव्रतः. ❀ Nil.: शंसितव्रत इति तालव्यादिदन्त्यमध्यपाठे शंसा प्रशंसा संजाता यस्य तत् शंसितं व्रतं यस्य सः। प्रशस्तव्रत इत्यर्थः।❀ — c) Ś1 K1 Ñ1 V1 °श्रयार्थे; *K3.4* B D °र्थी; Ñ3 °महार्थी. — d) Ñ1.3 V1 Da Dn D1 ब्राह्मणस्य जगाम ह; S °स्यागमत्तदा (G1 °गमंस्तदा).

4 a) G3 संयमात् (for स सम्यक्). T G1.4–6 तु; G3 तान्; *M6* (both) तु and तं. — *D1* (hapl.) *om.* *4b–5c*. — b) Ñ1.3 V1 B D विप्रं (for विद्वान्). Ś1 महर्षभम्. G1.2 विद्वान्महर्षिसत्तमान् (*G2* °मः). — *K2* om. *4cd*. — d) S तथा (T2 G1.6 सदा). Ñ1.2 V1 *B* *Da* *Dn* *D2* °तिथिव्रतः; D4 T1 °तिथिप्रियः; *T2* *G4–6* °तिप्रियंवदी; *G1.2* M °तिथीन्प्रति.

5 D2 om. *5abc* (cf. v. l. 4); K3 reads *5* after *9ab*. — b) Ś1 K1 नरर्षभ. S कुंती च भरतर्षभ. — d) *Ñ2* V1 B Da Dn D1.4 कथयंतं; *D2* *T* *G* (except *G2.4*) *M5.8* °यंतः. N1.3 V1 *B* *D* शुभाः; *G3–4* तथा; *G1* (both) तथा and सदा.

6 a) N (except *Ñ1*) च (for स). — b) Ñ1.3 V1 B D (except *D5*) सरितस्तथा (*Ñ2* °दा). — Ś1 K1 Ñ1 *G2* (hapl.) om. *6cd*. — c) *Ñ2* V1 B D (except D5) T G1.4–6 राज्ञश्च. Ñ2 V1 B D (except D5) °श्चर्यान्; T1 *G1.4–6* °श्चकारान्; G3 °श्चर्येशान्. — d) Cf. 6b. Ñ1 V1 B D (except *D5*) देशांश्चैव पुराणि च; T2 G1.4–6 M1.6 पुराणि च वनानि च.

स तत्राकथयद्विप्रः कथान्ते जनमेजय ।
पाञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयंवरम् ॥ ७
धृष्टद्युम्नस्य चोत्पत्तिमुत्पत्तिं च शिखण्डिनः ।
अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ॥ ८
तदद्भुततमं श्रुत्वा लोके तस्य महात्मनः ।
विस्तरेणैव पप्रच्छुः कथां तां पुरुषर्षभाः ॥ ९

कथं द्रुपदपुत्रस्य धृष्टद्युम्नस्य पावकात् ।
वेदिमध्याच्च कृष्णायाः संभवः कथमद्भुतः ॥ १०
कथं द्रोणान्महेष्वासात्सर्वाण्यस्त्राण्यशिक्षत ।
कथं प्रियसखायौ तौ भिन्नौ कस्य कृतेन च ॥ ११
एवं तैश्चोदितो राजन्स विप्रः पुरुषर्षभैः ।
कथयामास तत्सर्वं द्रौपदीसंभवं तदा ॥ १२

इति श्रीमहाभारते आदिपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

## १५४

ब्राह्मण उवाच ।
गङ्गाद्वारं प्रति महान्बभूवर्षिर्महातपाः ।
भरद्वाजो महाप्राज्ञः सततं संशितव्रतः ॥ १
सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।
ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृषिः ॥ २
तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा । C. 1. 6330 B. 1. 160. 3 K. 1. 180. 3

---

7 a) Dn1.n3 तथा (for तत्र). — c) Ñ2.3 V1 B5.6 D4 पंचालेषु. — d) M5 °सेनीस्वयं°.

8 a) T1 द्रोणस्य (for चोत्पत्तिम्). — b) T1 चोत्पत्तिं; T2 G द्रोणस्य (for उत्पत्तिं). — d) K1 G3 महामते.

9 a) G1.3.6 तम् (for तद्). K1 D2 °मिमं; D4 °मिदं (for °तमं). K1 दृष्टे (for श्रुत्वा). — b) K2.4 तस्य लोके (by transp.); K3 ब्राह्मणस्य. T G पांडवाः सत्यविक्रमाः (G2 °वास्ते महाबलाः). — After 9ab, K3 reads 5. — d) K3 तां कथां (by transp ); K4 Ñ1.2 V1 B D (except D5) कथां ते (or कथांते); cf. 7b. Ś1 K2 Ñ3 मनुजर्षभं (Ñ3 °भाः); K0.2–4 D5 मनुजोत्तमाः; M5 भरतर्षभाः.

10 Before 10, Ś1 K0.1 T2 G1.4–6 M6–8 ins. पांडवाः; K2–4 Ñ V1 B D पांडवा ऊचुः. — b) T1 संभवः (for पाव°). — cd) A few N MSS. वेदी°. S संभवो वेदिमध्ये (M °ध्यात्) च (T1 G2 तु) कथं कृष्णा व्यजायत.

11 a) G2 द्रोणो. T1 G3 M5 महेष्वासः. — b) T1 om. 11b. Ś1 K D5 सर्वास्त्राण्युपशिक्षत (K1–3 °क्षितः; D5 °क्षतः); T2 G °शिक्षयत्. — After 11ab, S ins.:

1675* धृष्टद्युम्नो महेष्वासः कथं द्रोणस्य मृत्युदः ।
[ T1 om. prior half. ]

— c) Ñ V1 B (except B1) D (except D2.4.6) विप्र सखायौ; T1 G2.3 प्रियसहायौ. — d) K2 तु; Ñ1.2 V1 B D (except D5) T2 वा (for च). G (except G1.3) कृतेनघ.

12 Before 12, Ś1 K1–3 D2.5 S (except T1) ins. वैशं°; Ñ1.2 V1 B Da Dn D1.4 वैशं° उ°. — a) Ś1 K1 M3 संचोदितो; K0 D5 तैर्नो°; K3 संनो°; Ñ3 वै चो°; G2 तैः क्रोधितो. S विप्रो (for राजन्). — b) D1 विप्रश्च; T G राजन्स; M पांडवैः. D1 पुरुषर्षभः; G3.5 (inf. lin.) °र्षभाः; M भरतर्षभ (M6.7 °भैः). — d) M6–8 द्रौपद्याः सं°. Ś1 T1 तथा.

Colophon om. in T G2.3.5. — *Major parvan:* G1.4.6 M संभव° (for आदि°). — *Sub-parvan.* K0 अंगारपर्ण; Ñ1.2 V1 B5 चैत्ररथ; to it K0 Ñ1.2 V1 B5 add द्रौपदीसंभव. Ś1 K1.2.4 Ñ3 B6 Da Dn1.n3 D1.2.5 (all om. the sub-parvan name) mention only द्रौपदीसंभव (B6 Da D1.2 संभव). — *Adhy. name:* K0.4 D5 पांडवप्रश्नः; K3 द्रौपदीसंभवकथनं. — *Adhy no* (figures, words or both): Dn3 164, D4m 167; G1 114; G4 112; G6 M 113. — *Śloka no.:* Dn M3 12. — *Aggregate śloka no.:* Dn3 6320.

### 154

☞ Many of the foll. st. recur (often with v. l.) in adhy. 121–122 and 128.

1 Ś1 K1 S om. उवाच. — Cf. 1331*. — a) G4 गतो (for महान्). — b) T2 G4.5 बभूव स; G3 बहुवर्षं (for बभूवर्षिर्). — c) A few MSS भार°. K (except K1) D5 महातेजाः. — d) K0.2.3 B6 Dn1.n3 D2 शंसित°; K1 D5 संश्रित°.

2 Cf. 1331*. — a) Ś1 K1 Dn2.n3 (both latter erroneously) G1–3 Nilp ततो (for गतो). — b) T2 G1 M नदीं (for सतीम्); see below for T1. — 2cd – (var.)

अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ॥ ३
तस्यां संसक्तमनसः कौमारब्रह्मचारिणः ।
हृष्टस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ ४
ततः समभवद्द्रोणः कुमारस्तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ ५
भरद्वाजस्य तु सखा पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तदा समभवत्सुतः ॥ ६
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ ७
ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवत् ।
द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्वशः ॥ ८
वनं तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत् ।
आगतं वित्तकामं मां विद्धि द्रोणं द्विजर्षभ ॥ ९

राम उवाच ।

शरीरमात्रमेवाद्य मयेदमवशेषितम् ।
अस्त्राणि वा शरीरं वा ब्रह्मन्नन्यतरं वृणु ॥ १०

द्रोण उवाच ।

अस्त्राणि चैव सर्वाणि तेषां संहारमेव च ।
प्रयोगं चैव सर्वेषां दातुमर्हति मे भवान् ॥ ११

ब्राह्मण उवाच ।

तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः ।
प्रतिगृह्य ततो द्रोणः कृतकृत्योऽभवत्तदा ॥ १२
संप्रहृष्टमनाश्चापि रामात्परमसंमतम् ।
ब्रह्मास्त्रं समनुप्राप्य नरेष्वभ्यधिकोऽभवत् ॥ १३

---

1. 121. 3^cd. — ^c) T1 सतीं ददर्शाप्सरसं. — ^d) K1 निशि; G2 मुनिः (for ऋषिः).

3 3^ab =(var.) 1. 121. 4^ab. — ^b) K1 वसने. T2 G (except G1.6) व्याहर°. Ko.3.4 D2.5 M वासो व्य(M6.8 व्य)पहर°. — For 3^cd cf. 1334*. — ^d) Ñ1.2 V1 B D (except D1) तदा (for ततः).

4 Cf. 1334*. — ^a) Ś1 K1.2 Ñ1.3 T1 G3 M5 तस्य (for तस्यां). G3.6 संरक्त°. — ^b) K3 T1 G2.3 कौमारव्रत°. — After 4^ab, G2.4 ins.:

1676* पश्यतो योनिसंस्थानमन्यावयवसौष्ठवम् ।

— 4^cd =(var.) 1. 121. 4^cd. — ^c) Ñ2 V1 B D (except D5) चिर° (for हृष्ट°). T2 G1.3.6 तस्य रेतस्तु च°. — ^d) Ś1 Ko.1 D1 T1 G2.4.5 आददे.

5 =(var.) 1. 121. 5. — ^c) Ś1 T2 G4 transp. स and च. — ^d) G3 कृत्स्न° (for सर्व°).

6 =(var.) 1. 121. 8. — G3 (hapl.) om. 6–8. — ^a) Ś1 T1 G2 भार°. K1 G2 च (for तु). T2 G1.4–6 °द्वाजसखा ह्यासीत्. — ^d) Ś1 K1 तथा (for तदा).

7 =(var.) 1. 121. 9. — G3 om. 7 (cf. v. l. 6). — ^b) K4 पार्थिव; G2 पार्षदः. — ^d) Ś1 K1 भरतर्षभ; Ko.3 चरितव्रतः; M6.8 °र्षभ.

8 G3 om. 8 (cf. v. l. 6). — 8^ab =(var.) 1. 121. 10^ab. — ^b) Ko पार्थिवो (for द्रुपदो). — For 8^cd cf. 1. 121. 16. — ^d) G3 सर्वतः (for °शः).

9 =(var.) 1. 121. 17. — ^a) T2 हेन (for वनं). — ^b) K (except Ko) D5 °द्वाजस्य; T1 G2 सं (for सु). — ^d) M3 transp. विद्धि and द्रोणं. Ñ V1 B D (except D5) द्विजोत्तम; G (except G2) °र्षभं; M6-8 नरर्षभ.

10 Cf. 1. 121. 20. — K1 S (but not Ś1) om. उवाच (G2 om. the ref.). — ^a) Ñ3 D5 अत्र; G3 अन्यद् (for अद्य). — ^b) Ñ1.2 V1 B3.5.6 Da Dn D1.2.4 मया सम°; Ñ3 ममैतम°; D5 M6-8 ममेदम°; T2 G (except G3) M5 ममैतद°. — D5 om. 10^cd. — ^c) Ko-2 D1 च for the first वा, and Ś1 च for both. — ^d) K (except K1) अन्यतमं; Ñ2 V1 Dn D1 एकतमं; B D3.4 एकतरं; T1 अत्यंतरं; M6-8 अद्य परं. K1 M6-8 शृणु.

11 Cf. 1. 121. 21. — K1 S (but not Ś1) om. उवाच (G2 om. the ref.). — ^a) G1 transp. च and एव. — ^b) K (except K1) ससंहाराणि भार्गव. — ^d) A few MSS. अर्हसि. Ś1 मां; Ko.3 नो; B5 वै (for मे).

12 G2 M6-8 om. ब्राह्मण उ°. K1 वैशंपायनः; K2 Ñ3 वैशं°; T1 G3 ब्राह्मणः; T2 G1–6 रामः. — ^ab) =(var.) 1. 121. 22^ab. G3 ब्राह्मणः स तथेत्युक्त्वा तस्मै च प्रददौ भृगु°. — 12^cd =(var.) 1. 121. 23^cd. — ^c) Ñ1.3 D5 T2 G3 M3.5 तु तद्; Ñ2 V1 Dn D1 सदा; T1 G1.4.5 तु सं; G6 च सं (for ततो). D5 सर्वं (for द्रोणः). G3 द्रोणोऽपि प्रतिगृह्यास्त्रं.

13 M6-8 om. 13^a, transp. 13^b and 13^c, and om. 13^d! — ^a) Ko.2.4 संहृष्टमनसश्चापि; Ñ V1 B D M3.5 °मना द्रोणो. — ^b) T G सद्यो न्यपर्सद; M6-8 °संमतात्. — ^c) Ñ1 Dn3 (erroneously) D1 T2 G1.6 °मुप्राप्य (apapāṭha acc. to Nīl.); Ñ2 V1 Dn1.n2 °मुप्राप्य. Ñ3 महायसमनुसंप्रा°; M6-8 महायशास्त्रनुसंप्रा°. 🙰 Nīl.: प्राप्ये.

ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पुरुषव्याघ्रः सखायं विद्धि मामिति ॥ १४

द्रुपद उवाच ।

नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ १५

ब्राह्मण उवाच ।

स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान् ।
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ १६
तस्मै पौत्रान्समादाय वसूनि विविधानि च ।
प्राप्ताय प्रददौ भीष्मः शिष्यान्द्रोणाय धीमते ॥ १७
द्रोणः शिष्यांस्ततः सर्वानिदं वचनमब्रवीत् ।
समानीय तदा विद्वान्द्रुपदस्यासुखाय वै ॥ १८
आचार्यवेतनं किंचिद्धृदि संपरिवर्तते ।
कृतास्त्रैस्तत्प्रदेयं स्यात्तदृतं वदतानघाः ॥ १९
यदा च पाण्डवाः सर्वे कृतास्त्राः कृतनिश्रमाः ।
ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः ॥ २०
पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः ।
तस्यापकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् ॥ २१
ततः पाण्डुसुताः पञ्च निर्जित्य द्रुपदं युधि ।
द्रोणाय दर्शयामासुर्बद्ध्वा ससचिवं तदा ॥ २२ C. 1. 6340 B. 1. 166. 72 K. 1. 160. 24

---

स्वपाठः। प्राप्येत्यपि पठंति ।ꕥ — d) D1.4.5 °त्वप्यधि°.

14 =(var.) 1. 122. 1. — a) Ko.4 आगत्य; K2.3 आगम्य (for आसाद्य). — Ko om. $14^{cd}$. — c) Ś1 K1.3 T2 G2.4.6 °व्याघ्र; D5 G1 M3.5 °व्याघ्रं; Mo-8 समनुप्रासं.

15 =(var.) 1. 122. 9. — Ko om. द्रुपद उ°; K1 S (but not Ś1!) om. उवाच. — After 15, K4 B3 ins.:

1677* ययोरेव समं वित्तं ययोरेव समं श्रुतम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ।
[ =(var.) 1. 122. 8. — (L. 1) B3 समं धनं. — (L. 2) B3 °विवादो मैत्री च. ]

16 =(var.) 1. 122. 11. — N1.3 om. ब्राह्मण उ°; T G M3.5 om. उवाच. Ś1 K1.2 Mo-8 वैशं°; B6 वैशं° उ°. — a) Ś1 (*sup. lin.* as in text) पूर्वं नि°; K1 सर्वं नि°; B5 परिनि°. — b) S (except G3) पांचाले. — a) Ñ3 सकाशं (for नग°).

17 $17^{ab}$ =(var.) 1. 122. $39^{cd}$. — a) Ko पुत्रान्; T G (except G2.5) पार्थान्. T G M8 समानीय. — b) D5 अस्त्राणि (for वसू°). — d) G3.5 शीघ्रं (for शिष्यान्).

18 a) Ko transp. शिष्यान् and सर्वान्. Ko T1 तदा (for ततः). N2 V1 Dn पार्थान् (for सर्वान्). M °ष्यान्समाहेदं (M8 °मादाय). — M om. $18^{bc}$. — Cf. 1. 122. $41^{ab}$. — c) Ñ2 V1 B D (except D5) तु तान्; T G ततः (for तदा). Ñ2 V1 B6 Da Dn D1 T1 G शिष्यान् (G3 धीमान्); B1.3.5 D3.4 T2 सर्वान् (for विद्वान्). — d) Ś1 द्रुपदस्य सखाय वै (marg. °स्य विरोधता); K1 दस्य विधायतां. — After 18, M (which om. $18^{bc}$ nd $19^{cd}$) ins.:

1678* द्रोणः ।
गुरुशुश्रूषणं चैव तथैव गुरुदक्षिणाम् ।

19 =(var.) 1. 123. 42. — M om. $19^{ab}$. — Before 19, T G (except G2.3) ins. द्रोणः. — b) Ñ V1 B D हृदि यद्वर्तते (Dn3 संवर्तते) मम; T G प्रदेयं परि°. — c) T G (except G1) संप्रदेयं; M8 तत्र देया (cf. 1678*). Ñ1 मे (for स्यात्). — d) Ñ1 नानृतं. — After 19, K4 Ñ2 V1 B D (except D5) ins.:

1679* सोऽर्जुनप्रमुखैरुक्तस्तथास्त्विति गुरुस्तदा ।;

while S ins.:

1680* तथेत्युक्त्वा च तं पार्थः पादौ जग्राह बुद्धिमान् ।

G2.3 cont.:

1681* विद्यानिष्क्रयजं वित्तं किं देयं ब्रूहि मे गुरो ।

Cf. 1679* and 1680* with 1. 122. 43.

20 G3 om. $20^{ab}$. — a) Ñ1 ये ते (for यदा). K (except K1) तु (for च). Ś1 K Ñ1 Da D5 कौर° (for पाण्ड°). M5 चान्ये (for सर्वे). — b) B3 कृतार्थाः. K3 Ñ3 B3.5 D (except Da) कृतनिश्चयाः; M सर्वतोभवन्. — c) T2 G1-6 तदा (for ततो). — d) M दातव्या गुरुदक्षिणा.

21 a) K4 पार्थिवो; D1 T2 G1.6 M5 पार्षदो. — b) G1 चित्रवत्यां; G2 येत्र°; M5 शत्र°; Cd as in text. K1 महेश्वरः. — c) Ś1 (marg. as in text) तस्यापेक्ष्यस्य; Ko अद्यापहृष्य; K2 Ñ1.2 V1 B D M3 तस्मादा°; K4 आदाया°; N3 तस्मास्म°; T1 तस्याव°; Mo-3 तत्राप°. — After 21, D1 (marg. *sec. m.*) S (except G3) ins.:

1682* धार्तराष्ट्रैश्च सहिताः पाञ्चालान्पाण्डवा ययुः ।
यज्ञसेनेन संगम्य कर्णदुर्योधनादयः ।
निर्जिताः संन्यवर्तन्त तथान्ये क्षत्रियर्षभाः ।
[ G3 ins. lines 2-3 after 1683*. ]

22 Cf. I. 123. 4f. — c) G2 °य प्रशशंसुस्ते. — d) Ñ3 समुचितं तदा; G6 समधिगं तथा. — After 22, D1 (marg. *sec. m.*) S ins.:

23 .27

द्रोण उवाच ।
प्रार्थयामि त्वया सख्यं पुनरेव नराधिप ।
अराजा किल नो राज्ञः सखा भवितुमर्हति ॥ २३
अतः प्रयतितं राज्ये यज्ञसेन मया तव ।
राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ॥ २४
ब्राह्मण उवाच ।
असत्कारः स सुमहान्मुहूर्तमपि तस्य तु ।
न व्येति हृदयाद्राज्ञो दुर्मनाः स कृशोऽभवत् ॥ २५

इति श्रीमहाभारते आदिपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

---

1683* महेन्द्र इव दुर्धर्षो महेन्द्र इव दानवम् ।
महेन्द्रपुत्रः पाञ्चालं जितवानर्जुनस्तदा ।
तं दृष्ट्वा तु महावीर्यं फल्गुनस्यामितौजसः ।
व्यस्मयन्त जनाः सर्वे यज्ञसेनस्य बान्धवाः ।
नास्त्यर्जुनसमो वीर्ये राजपुत्र इति ब्रुवन् ।

[ (L. 2) G6 M5 पांचालान्. — (L. 3) M महद्वीर्यं. ] — After the above, G2 ins. lines 2–3 of 1682*.

23 Ś1 K1 S om. उवाच (G3 om. the ref.). — $23^{ab}$ =(var.) 1. 128. $10^{ab}$. — a) G2 प्रार्थये च. T1 पुनः (for त्वया). — b) Ś1 सह; T1 आवां (for एव). — $23^{cd}$ =(var.) 1. 128. $11^{ab}$. — c) T G नाराजा. G3 खलु (for किल). K0.3 D5 राज्ञां.

24 $24^{ab}$=1. 128. $11^{cd}$. — a) D1 G2 प्रयाचितं. K0 G3 राज्यं. — b) Ñ2 V1 B D (except D5) त्वया सह (D1 किल) (for मया तव). M6–8 नृप (for तव). — $24^{cd}$=1. 128. $12^{ab}$. — c) T G1–3 राजासीद्दक्षिणे. G5 M8 तीरे. — d) Ś1 K जाह्नव्यामह°. — After 24, K (except K1) D5 ins.:

1684* तथेति द्रुपदेनोक्ते वचने द्विजसत्तम ।
संपूज्य द्रुपदं द्रोणो मेषयामास तत्त्ववित् ।,

which in D5 is followed by lines 1–2 of 1686* (cf. v. l. 25). On the other hand, after 24, Da ins. 1686*, while S ins.:

1685* कन्याकुब्जे च काम्पिल्ये वसेथास्त्वं नरोत्तम ।
ब्राह्मणैः सहितो राजन्नहिच्छत्रे वसाम्यहम् ।

[ (L. 1) T2 G3 भजेथास्त्वं. G1 नरेश्वर; M नृपोत्तम. ]

25 M om. ब्राह्मण उ°; T G3 om. उवाच. Ś1 K1.2 Ñ3 वैशं°. — Ñ2 V1 B Dn D1.2,4,5 (here lines 3–6 only) ins. after ब्राह्मण उ°: Da, after 24: K4 D5 (here lines 1–2 only), after 1684*:

1686* एवमुक्ते हि पाञ्चाल्यो भारद्वाजेन धीमता ।
उवाचास्त्रविदां श्रेष्ठो द्रोणं ब्राह्मणसत्तमम् ।
एवं भवतु भद्रं ते भारद्वाज महामते ।
सख्यं तदेव भवतु शाश्वदभिमन्यसे ।
एवमन्योन्यमुक्त्वा तौ कृत्वा सख्यमनुत्तमम् । [5]
अगमतां द्रोणपाञ्चाल्यौ यथागतमरिंदमौ ।

[ Before line 1, Da ins. वैशं° उ°. — (L. 2) B1.3,6 Da D1.2,4 श्रेष्ठं. — (L. 4) K4 °ख्यं तद्भवत्ते वै. ] — a) Ś1 D4 तु; K B5 D5 T1 G1.2 च; T2 G4,5 सु (for स). Ś1 K1 Ñ3 V1 Da Dn D1 G3 तु; G5 स (for सु). — b) Ś1 K1.3 इव (for अपि). K3 सः; G3 च (for तु). — After $25^{ab}$, T1 ins.:

1687* निशम्य तस्य वचनं कृत्वा मनसि दुर्मनाः ।

— c) K0.3,4 Ñ2 V1 B D नापैति; K1 G3 न वेति; G1 सर्वेति; M न व्यैति. Ñ1 तेन (for राज्ञो).

Colophon om. in T1 G2,3 — *Major parvan:* T2 G1,4–6 M संभव° (for आदि°). — *Sub-parvan:* K0 अंगारपर्ण; Ñ1.2 V1 B5 D5 चैत्ररथ; *to it* K0 Ñ1.2 V1 D5 add द्रौपदीसंभव. Ś1 K1–3 Ñ3 B1.3,6 Da Dn1.n3 D1.4 (all om. the sub-parvan name) mention only द्रौपदीसंभव (B1 एकचक्रायां द्रौपदीसंभवः; D1 द्रौपदीस्वयंसंभव) — *Adhy. name:* K0.4 द्रुपदवैरारम्भ (K4 °वैराख्यानः). B5 द्रौपदीस्वयंवरः; D5 पांडवान्प्रति वाक्यं. — *Adhy. no.* (figures, words or both): Dn2 *165*; D4 *168*; T2 G4,5 113; G1 115; G6 M 114. — *S'loka no.:* Dn 28; M2 30. — *Aggregate s'loka no.:* Dn2 6348.

## 155

☞ This adhy. (with some variations and omissions) forms passage No. 79 of App. I, a passage interpolated in K4 D1 (both *sec. m.* on suppl. fol. शोधपत्र) S after adhy. 128, with which the present adhy. should be compared.

1 Ś1 T1 G2,3 om. ब्राह्मण उ°; K1 M om. उवाच. T2 G1,4–6 वैशं° (for ब्राह्मण उ°). — M subst. for $1^{cd}$: G2,4 ins. after $2^{ab}$:

1688* द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरंस्तदा ।

[ =(var.) I. 128. $15^{ab}$; and line 1 of passage No. 79 of App. I. ]

— M (which om. $1^{cd}$), transp. $1^{cd}$ and $2^{ab}$. — a) K3 D5 Da D1,2 अमर्षात्; G3 राजर्षिः. Ś1 K0.1,4 Ñ3

# १५५

ब्राह्मण उवाच ।
अमर्षी द्रुपदो राजा कर्मसिद्धान्द्विजर्षभान् ।
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् ॥ १
पुत्रजन्म परीप्सन्वै शोकोपहतचेतनः ।
नास्ति श्रेष्ठं ममापत्यमिति नित्यमचिन्तयत् ॥ २
जातान्पुत्रान्स निर्वेदाद्धिग्बन्धूनिति चाब्रवीत् ।
निःश्वासपरमश्चासीद्द्रोणं प्रतिचिकीर्षया ॥ ३
प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च ।
क्षात्रेण च बलेनास्य चिन्तयन्नान्वपद्यत ।
प्रतिकर्तुं नृपश्रेष्ठो यतमानोऽपि भारत ॥ ४
अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन् ।
ब्राह्मणावसथं पुण्यमाससाद महीपतिः ॥ ५
तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः ।
तथैव नामहाभागः सोऽपश्यत्संशितव्रतौ ॥ ६
याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ पृषतात्मजः ।
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ॥ ७
तारणे युक्तरूपौ तौ ब्राह्मणावृषिसत्तमौ ।
स तावामन्त्रयामास सर्वकामैरतन्द्रितः ॥ ८
बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे ।
प्रपेदे छन्दयन्कामैरुपयाजं धृतव्रतम् ॥ ९
पादशुश्रूषणे युक्तः प्रियवाक्सर्वकामदः ।
अर्हयित्वा यथान्यायमुपयाजमुवाच सः ॥ १०
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ।
उपयाज कृते तस्मिन्गवां दातास्मि तेऽर्बुदम् ॥ ११ C. 1. 6368 B. 1. 167. 12 K. 1. 181. 12

---

द्रुपदस्त्वमर्षी (Ko.4 °मर्षात्; K1 °दश्चमर्षी) नृपतिः; D5 नृपस्त्वमर्षी द्रुपदो. — b) T G कर्मसिद्धिं द्विजोत्तमात्.

2 M transp. $1^{cd}$ and $2^{ab}$. — a) Ś1 K Ñ1.3 D5 M5 स (for वै). — After $2^{ab}$, G3.4 ins. 1688*. M5 here om. $2^{c}$–$4^{b}$, but cf. passage No. 79 of App. I. — c) G4 सुतश्रेष्ठं. Ñ2 V1 B D अपत्यं मे (for ममापत्यं). — d) T2 G2 इति निश्चित्य चिंतयन्; M6-8 इति चिंत्यं विचिंतयन्.

3 T2 om. $3^{a}$–$4^{d}$; M8 om. 3 (cf. v. l. 2). — a) G3 जातपुत्रान्. B (except B6) D2.5 G3 निर्वेदान्. — b) K1 दिग्यहू°; K3 धिगेता°; G1.4-6 धिग्यहू°; M8 (inf. lin. as in text) धिग्वसू°. G2 धिक्कुलेति च सोब्रवीत्. — c) Ko.3 D5 निःश्वासः; T1 G1.2.4.5 निर्वेदः. G6 निर्वेदश्चाथ तस्यासीत्. — d) Ko प्रतिजिगीषया. G (except G2.3) द्रोणाभिमर्षि°.

4 T2 om. $4^{abcd}$; M8 om. $4^{ab}$ (cf. v. l. 2, 3). — a) K (except K1) एव; T1 तु (for च). — c) K1 नानुपद्यते; K4 °न्वपद्यते; Ñ1 °न्वपश्यत; Ñ2 V1 B D (except D5) M5 नाभ्यगच्छत. T2 G परा(G1.4 परं; G2 पुरा)जेतुं हि नाशकत्. — M8 om. $4^{ef}$. — e) G6 अप्राप्तवान्; M (M8 om.) प्रतिकर्तुं. T G नरश्रेष्ठो.

5 a) K1 T2 अपि (for अथ). — b) Ko.4 D5 गंगातीरे.

6 a) G3 चासीद् (for कश्चित्). — b) Ś1 K1 एव (for च). Ko B3 (m as in text) कश्चित् (for द्विजः). G1 (corrupt) अतिथिद्विजः; G3 M (except M8) अप्रतिद्विजः. — c) K4 D2 तौ; Ñ2 V1 Dn D1 च; Ñ3 B3.5 स (for ना°). S अधीयानौ (M तथैव तौ) महाभागौ. — d) Ko.2.3 Dn1 D1 शंसित°; Ñ3 संश्रित°.

7 a) K1 विप्रर्षी. — b) D3 संपन्नौ; D4 भ्रातरौ; T1 तपंतौ; T2 G (except G2) श्राम्यंतौ. Ñ3 V1 B D परमेष्ठिनौ.

8 a) K4 T G1.3-6 M तरुणौ. D3 रूपयुक्तौ (for युक्त°). G1 तु (for तौ). Ñ3 V1 Dn °णे यौ युक्तरूपौ; G5 युक्तरूपौ च तौ दृष्ट्वा. — c) K Ñ1.3 S स उपा(K1 स तमा)मंत्र°.

9 a) Ñ1 तथा (for बुद्ध्वा). Ñ2 V1 B D (except D5) transp. तयोः and बलं. N1 बुद्धिं (for तयोर्). Ñ3 V1 B D (except D5) तत्र (for बुद्धिं). T G स बुद्ध्वा (T1 समिष्ट्वा; G4 बुद्धवान्) बाल(T1 जाल)बुद्धिं तु. — c) M (except M5) उपयाजं (for कनी°). — d) M6-8 कनीयांसं (for उप°). T1 G3.4 °व्रतः; G1.2 M दृढव्रतः.

10 a) G2 शक्तः (for युक्तः). — b) Ś1 K1 M5 प्रिय(K1 °या)वत्; Da1 प्रीयवान्; T1 प्रियवान्. — c) K (except K1) Ñ1.2 V1 B D G3 M अर्चयित्वा. Ñ3 यथाकामं. — d) D1 T G (except G3) ह (for सः).

11 a) Ś1 K1 येनैव; T1 G3 यदि (for येन मे).

यद्वा तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत् ।
सर्वं तत्ते प्रदाताहं न हि मेऽस्त्यत्र संशयः ॥ १२
इत्युक्तो नाहमित्येवं तमृषिः प्रत्युवाच ह ।
आराधयिष्यन्द्रुपदः स तं पर्यचरत्पुनः ॥ १३
ततः संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः ।
उपयाजोऽब्रवीद्राजन्काले मधुरया गिरा ॥ १४
ज्येष्ठो भ्राता ममागृह्णाद्विचरन्वननिर्झरे ।
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ॥ १५
तदपश्यमहं भ्रातुरसांप्रतमनुव्रजन् ।
विमर्शं संकरादाने नायं कुर्यात्कथंचन ॥ १६
दृष्ट्वा फलस्य नापश्यद्दोषा येऽस्यानुबन्धिकाः ।
विविनक्ति न शौचं यः सोऽन्यत्रापि कथं भवेत् ॥
संहिताध्ययनं कुर्वन्वसन्गुरुकुले च यः ।
भैक्षमुच्छिष्टमन्येषां भुङ्क्ते चापि सदा सदा ।
कीर्तयन्गुणमन्नानामघृणी च पुनः पुनः ॥ १८
तमहं फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा ।
तं वै गच्छस्व नृपते स त्वां संयाजयिष्यति ॥ १९
जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन् ।
उपयाजवचः श्रुत्वा नृपतिः सर्वधर्मवित् ।
अभिसंपूज्य पूजार्हमृषिं याजमुवाच ह ॥ २०

— $^{b}$) Ś1 K1 पुत्रो द्रोणस्य मृ°. — After $11^{ab}$, D4 (marg. *sec. m.*) S ins.:

1689* अर्जुनस्य तथा भार्या भवेद्वा वरवर्णिनी ।

[ M transp. तथा and भवेत्. D4 T1 M या (for वा). G2 भार्यार्थमर्जुनस्यापि कन्या स्याद्वर°. ]

— $^{c}$) T1 ब्रह्मन् (for तस्मिन्). — $^{d}$) D4 G2 दास्यामि. G2 च (for ते). K1 भवान् (for ऽर्बुदं). M3 दाताहमर्बुदं.

12 $^{a}$) D4 T G यदन्यत्ते द्वि°. — $^{c}$) K3 तु (for तत्). G2 सर्वं त्वेतत्. S प्रदास्यामि (M6–8 °तव्यं). — $^{d}$) Ñ1.2 V1 B D transp. अस्ति and अत्र. G2 मे तत्र सं°.

13 M6–8 here om. 13–29, but cf. passage No. 79 of App. I. — Before 13, T2 G (except G2) ins. ब्राह्मणः. — $^{a}$) K0.2.4 इत्युक्ते. D2 T G (except G2) एव (for एवं). — $^{b}$) Ñ2 V1 Dn D1 प्रत्यभाषत. — After $13^{ab}$, G3 (which om. $13^{c}$–$33^{d}$) ins. 1690* (cf. v. l. 30). — $^{d}$) Ñ V1 Da2 Dn2 परिचरन्. Ś1 K पुनः परिचरन्मुदा.

14 G3 M6–8 om. 14 (cf. v. l. 13). — $^{b}$) K2.3 °दं द्विजसत्तमः. — T2 G1.2.4–6 here om. $14^{c}$–$29^{d}$, but cf. passage No. 79 of App. I. — $^{cd}$) Ñ1.2 V1 B D (except D5) T1 transp. राजन् and काले.

15 T2 G M6–8 om. 15 (cf. v. l. 13, 14). — $^{a}$) Ñ3 V1 B D (except D5) °रम्याहने वने.

16 T2 G M6–8 om. 16 (cf. v. l. 13, 14). — $^{a}$) B3.6 D5 T1 तं (for तद्). — $^{c}$) B1 (m as in text).3 Cd विमार्गसं°. — $^{d}$) B1 (m as in text) तर्कं (for नायं). Dn D1 कदाचन.

17 K2 reads from 1. 155. 17 to 1. 158. 13 after गन्धर्वे in 1. 158. 51*: an error due probably to the transposition of loose folia of the exemplar. — T2 G M6–8 om. 17 (cf. v. l. 13, 14). — $^{a}$) B1 फलं तु; B5 फलं च; M3.5 फलं स. — $^{b}$) K0.4 Ñ V1 B D T1 M3.5 दोषान्; K2 दोषम्. K1 येस्यापि बंधकः; K3 अस्यानुबंधिकं; K4 °बंधकाः; Ñ V1 B D T1 M3.5 पापा(Ñ3 योस्या; D1 अन्या°; M3.5 तस्या)नुबंध(B1.3 °बंधि; D5 °बंति)कान्. — $^{c}$) Ś1 K4 शौचे.

18 T2 G M6–8 om. 18 (cf. v. l. 13, 14). — $^{b}$) K0 °कुलेषु यः. Ś1 K Ñ1 D5 सः (for यः). — $^{c}$) Ś1 K0.3 B Dn1.n3 D2.5 भैक्ष्यम्; K1 D4 भक्ष्यम्. Ś1 उद्दिष्टं; K0.2.4 Ñ1.2 V1 B Da Dn D5 M3.5 उत्सृष्टं; K1 उद्दिश्यं; K3 उत्सृज्यं. K2 सर्वेषां. — $^{d}$) K0 D5 चैव; Ñ3 V1 B3 B5 D2 स स; Dn1.n3 D1.4 स्म च; B1 Da Dn2 T1 च स्म; B3 D2 स स्म; B5 च स (for चापि). Ñ3 भुंजति स्म; M3.5 स भुंक्ते स्म (for भुङ्क्ते चापि). K0 D5 शिशुः सदा; Ñ3 V1 B Da Dn D1.2.4 M3.5 यदा सदा; T1 यथा तथा. — $^{f}$) K3 घृणी यत्र; M3.5 अघृणी यः. N1 मुहुर्मुहुः (for पुनः पुनः).

19 T2 G M6–8 om. 19 (cf. v. l. 13, 14). — $^{a}$) Hypermetric! K0.4 Ñ1.2 V1 B (except B6) D — $^{b}$) B6 m तं वै (for तमहं). K2.3 फलार्थिनं सं मन्येहं. — $^{b}$) M3.5 कर्म- (for तर्क-). — $^{c}$) D4 गच्छाय. — $^{d}$) M3.5 स त्वा संयोज°.

20 T2 G M6–8 om. 20 (cf. v. l. 13, 14). — $^{a}$) M3.5 अजुगुप्समानो नृपते (hypermetric). — $^{b}$) Ś1 K1.2 च; B K0.3.4 स; Ñ1 सु; Ñ3 M3.5 न; T1 एवं (for इदं). — $^{d}$) K3 तं यथौ; M3.5 (except B6) Da T1 अचिंत°. — $^{d}$) Ñ3 V1 B (B3 marg.) D (except D5) द्रुपदः (for नृपतिः). — $^{f}$) Ś1 transp. ऋषिं and याजं. Ñ3 V1 B Dn D1.2.4 T1 याजस्याश्रममभ्यगात्; T1 corrupt. — $^{f}$) Ś1 K1.2.4 Ñ1.2 D5 M3.5 सः (for ह).

21 T2 G M6–8 om. 21 (cf. v. l. 13, 14). — $^{a}$) K3.4

अयुतानि ददान्यष्टौ गवां याजय मां विभो ।
द्रोणवैराभिसंतप्तं त्वं ह्लादयितुमर्हसि ॥ २१
स हि ब्रह्मविदां श्रेष्ठो ब्रह्मास्त्रे चाप्यनुत्तमः ।
तस्माद्द्रोणः पराजैषीन्मां वै स सखिविग्रहे ॥ २२
क्षत्रियो नास्ति तुल्योऽस्य पृथिव्यां कश्चिदग्रणीः ।
कौरवाचार्यमुख्यस्य भारद्वाजस्य धीमतः ॥ २३
द्रोणस्य शरजालानि प्राणिदेहहराणि च ।
षडरत्नि धनुश्चास्य दृश्यतेऽप्रतिमं महत् ॥ २४
स हि ब्राह्मणवेगेन क्षात्रं वेगमसंशयम् ।
प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः ॥ २५

क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः ।
तस्य ह्यस्त्रबलं घोरमप्रसह्यं नरैर्भुवि ॥ २६
ब्राह्ममुच्चारयंस्तेजो हुताहुतिरिवानलः ।
समेत्य स दहत्याजौ क्षत्रं ब्रह्मपुरःसरः ।
ब्रह्मक्षत्रे च विहिते ब्रह्मतेजो विशिष्यते ॥ २७
सोऽहं क्षत्रबलाद्धीनो ब्रह्मतेजः प्रपेदिवान् ।
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् ॥ २८
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ।
तत्कर्म कुरु मे याज निर्वपाम्यर्बुदं गवाम् ॥ २९
तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयत् । C. 1 6386 B. 1 167 31 K. 1 181 22

Dn1 n3 D1 5 T1 M3 5 ददाम्यष्टौ — b) M3 5 याज (for गवा) Ś1 K1 M3 5 मा (for मां) Da प्रभो — c) Ñ1 °भितप्त मा — d) K1 Ñ3 V1 B D T1 प्र°; Ñ1 त्वा; M3. 5 मा (for त्वं)

22 T2 G M6-8 om 22 (cf v l 13, 14) — a) K3 Ñ1 D5 धर्मविदां — b) Ś1 K1 3 क्षात्रे (Ś1 क्षत्रे, K1 क्षात्र) चाद्ये ह्यनुत्तम, K0 2 4 क्षात्रे धर्मे ह्यनु°; N1 3 M3 5 क्षत्रास्त्रे (Ñ1 °स्त्रै) चाप्य° — c) Ñ3 V1 Dn पराजैष्ट, B (B5 marg) Da D1 T1 °जेष्ट — d) K4 समैतत्, D5 यस्मा वै, T1 मा चैव

23 T2 G M6-8 om 23 (cf v l 13, 14) — a) Ñ1 नान्यस्, N3 B5 नास्य, D5 नापि K0 Ñ1. 2 B5 D5 तुल्योस्ति, K1 त्वल्पस्य, Ñ3 V1 B1 Da Dn D1 2 4 तस्यास्या, B3 6 तुल्योस्या, T1 तत्तुल्यो — c) M3. 5 भारताचार्य°

24 T2 G M6 8 om 24 (cf v l 13, 14) — b) Ñ3 प्रसह्यत न वै भुवि — c) B5 D5 T1 षड्रत्नि (T1 खड्गानि) कार्मुकं चास्य (B5 यस्य) — d) Ñ3 V1 B D (except D5) T1 °ते परम M3 5 तत्समाप्रमनुत्तम

25 T2 G M6-8 om 25 (cf v l 13 14) — a) K3 ब्राह्मण्य वे°, K4 N3 3 V1 B5 6 Dn D1 4 5 T1 °वपेण Cd cites वेगेन (=सत्कारेण) — b) K3 M3 5 क्षत्रवेगम्, B5 क्षत्रवेपम्, D1 5 °त्र वेपम् D5 अधारयन् (for असशयम्) — d) Ś1 K महातपा (K3 °बल) (for °मना)

26 T2 G M6-8 om 26 (cf v l 13, 14) — a) Ñ1. 3 B3 6 T1 विहित; D1 जानीतो — b) Ñ3 B5 D2 T1 °दग्न्यम् Ś1 K D5 इवापर, N1 इवोद्यत; Ñ3 B5 6 D2 T1 इवोत्थित, B1. 3 Da Dn3 D1 4 इवोत्थित, M3. 5 इव स्थित — c) K3 D2 शस्त्र° (for ह्यस्त्र°) — d) N3 V1 B D T1 अ(D5 न)प्रधृष्य M3 5 परैर् B3 अपि (for भुवि)

27 T2 G M6-8 om 27 (cf v l 13, 14) — a) Ñ3 V1 B1 3 D सधारयन् (for उच्चा°) — c) K0. 2 transp समेत्य and स — d) Ś1 क्षत्र ब्राह्म°, K0 ब्रह्मक्षत्र°; Ñ1 3 M3. 5 °पुर सर, Ñ3 V1 Dn क्षात्रधर्म°; B5 क्षात्रधर्मपुरःसर, B6 D1 क्षात्र धर्म°, Da D2 क्षात्र ब्रह्म°, D4 T1 क्षात्र ब्रह्मपुर सर; D5 क्षत्रर्षभमहाबल — f) N3 V1 B D (except D2 4 5) ब्राह्म तेजो

28 T2 G M6-8 om 28 (cf v l 13, 14) — a) K0 2. 4 Ñ1. 3 V1 B1 3 Dn3 n2 D1 5 T1 क्षात्राद्द°; Ñ3 B5 D2 4 क्षत्राद्द°, Da साक्षाद्द° Dn (erroneously) D1 Nilp भीतो (for हीनो) — b) K0 1 B (except B5) D (except D1) ब्राह्म तेज, K3 4 ब्राह्म ते°

29 T2 G M6-8 om 29 (cf v l 13, 14) — a) B5 मन्ये (for पुत्र) — b) K1 (before corr) दुर्लभ (for दुर्ज°) — d) N3 3 V1 B D T1 वितरामि, M3 5 प्रदास्यामि

30 G3 om 30 (cf v l 13) T2 G (G3 om) M6 8 transp $30^{abcd}$ and $30^{ef}$ — a) T2 G1 4-6 यज्ञ; G2 राज्ञ (for याजो) — b) Ś1 K4 यज्ञार्थे सम°, K0. 2 3 याज्यार्थे सम°, Ñ1 °र्थे विप्रकल्पयन्, B1 3 6 Da1 T1 °कल्पयन्, T2 G (G3 om) M3 (orig) 6-8 पुत्रकामीयमारभत् (T2 °माहरत्), M3 (inf lin) 5 याज्ञा(M5 यागे)र्थेभिप्रकल्पित — c) K3 Ñ V1 B Da Dn D1. 2. 4 T1 M3 (inf lin) गुर्वर्थं (as in text) the rest °र्थम् D5 अपि (for इति) K4 T2 G4 5 M6-8 चा(K4 वा)काम, B6 D4 वाकाम, D5 चेत्काम, M3 inf lin सोकाम; M5 सोकाम — d) Ś1 K1 °याजमयाज°; K0 2-4 °याजमयोज°; S (G3 om) °याजश्चकार ह (T1 °याजमरोचयत्) — T2 G M (except M5) ins after $30^{cd}$ (G5, after $13^{ab}$)

1690* याजस्तु यजतां श्रेष्ठो हव्यवाहमतर्पयत् ।

— Before $30^{ef}$, M6-8 ins ब्राह्मण — f) Ś1 -थ तस्य, T1 तदापि, T2 G (G3 om) तथापि; M3. 5 6 तथेति (for तथा

36 7.32 1.33 गुर्वर्थं इति चाकाममुपयाजमचोदयत् ।
याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः ॥ ३०
ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ।
आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै ॥ ३१
स च पुत्रो महावीर्यो महातेजा महाबलः ।
इष्यते यद्विधो राजन्भविता ते तथाविधः ॥ ३२
भारद्वाजस्य हन्तारं सोऽभिसंधाय भूमिपः ।
आजह्रे तत्तथा सर्वं द्रुपदः कर्मसिद्धये ॥ ३३
याजस्तु हवनस्यान्ते देवीमाह्वापयत्तदा ।
प्रैहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ॥ ३४

देव्युवाच ।
*अवलिप्तं मे मुखं ब्रह्मन्पुण्यान्गन्धान्बिभर्मि च
सुतार्थेनोपरुद्धास्मि तिष्ठ याज मम प्रिये ॥ ३५

याज उवाच ।
याजेन श्रपितं हव्यमुपयाजेन मन्त्रितम् ।
कथं कामं न संदध्यात्सा त्वं विप्रैहि तिष्ठ वा ॥ ३

ब्राह्मण उवाच ।
एवमुक्ते तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात्कुमारो देवसंनिभः ॥ ३७
ज्वालावर्णो घोररूपः किरीटी वर्म चोत्तमम् ।

---

च). — After 30, T2 G (except G3) M6-8 ins.:

1691* पाण्डोः स्नुषार्थं कन्या च भवेदिति मतिर्मम ।;

while T1 ins.:

1692* तथेत्युक्त्वा तु तं राज्ञः पुत्रकामीयमारभत् ।

(which is a v. l. of 30ab; see above).

31 T2 G M6-8 om. 31-33. — b) Ñ1 महायशाः. — After 31, M8.5 ins.:

1693* यथोक्तं कल्पयामास राजा विप्रेण तं क्रतुम् ।

32 T2 G M6-8 om. 32 (cf. v. l. 31). — ab) K2 B6 transp. °वीर्यो and °तेजा. K0.3.4 महोत्साहो (for °तेजा). — d) D4 यथाविधः.

33 T2 G M om. 33 (cf. v. l. 31). — b) Ñ3 V1 B D (except D5) T1 भूपतिः. — c) Ś1 आजहुस्. K1 स तदा (for तत्तथा). B6 Dn D5 सत्रं (for सर्वं). B3 °ह्रे तं महासत्रं.

34 a) D1 याजस्य; G2 स याजः. S सवन°. — b) Ś1 K0.3 आह्वाययत्; K1 आह्वाह्व°; Ñ2 V1 B3 D आज्ञाप°; T1 G1-3 आवाह°; M5 अन्वाप°; M6 आह्वाव°. — c) K2 Ñ V1 B (except B6) Dn1 D5 G1 M8 प्रेहि. Ś1 K2 B6 T G1.4-6 M मा (M8 वै) (for मां). K3 पृषत; B2.3 Nilp पार्षेति; Cd as in text. G3 प्रयाहि याज द्रुपदं. — After 34, S ins.:

1694* कुमारश्च कुमारी च पतिवंशविवृद्धये ।

[ T G1.2 °विवर्धये; G3 °विवर्धया; M पितृवंश°. ]

35 Ñ2.3 V1 B D राज्ञ्युवा°; S देवी (T1 G3 om. the ref.). — a) Hypermetric ! Ś1 स्वलिप्तं; K (except K1) Ñ1.3 D5 आलिप्तं; T G1.3-6 M नालिप्तं (for अव°). T1 च; T2 G1-6 वै (for मे). T2 G3.6 मम (for मुखं). K0.2.4 D5 विप्र; T2 G3.6 सुखं; G1 पुण्यान् (for ब्रह्मन्). K1 Ñ2 V1 B D4 Dn D1.2.4 om. मे. G2 (corrupt) राज्ञीमालिप्त मे ब्र° (of which the राज्ञी is from the re to speaker). — b) Ñ3 V1 B D (except D5) दिव्यान G1.4 गंधान् (for पुण्यान्). G1 न च; G4 चापि (f गन्धान्). K1 विवर्पि; K3 D1 G3 बिभर्पि. — c) K0.3 पुत्रार्थिन्यवरु°; Ñ2.3 V1 B D °तार्थे(D4 °र्थं)नोपलब्धास्मि S न पत्नी (G1.2 न पति; G3 सपत्नी; G4 पत्नी न) तेस्मि (G तेस्मिन्; M8.8 तेस्ति) सुत्यर्थं (T2 G1-3 °र्थे). — After 3 G2.4 ins.:

1695* राज्ञा चैवमभिहितो याजो राज्ञीमुवाच ह ।
तत्सर्वं सहमानश्च महातेजोनिधिः स्वयम् ।

[ (L. 2) G2 गर्वं (for सर्वं). ]

36 Ś1 K S om. उवाच (G4 om. the ref.). — a) Ś K2 Ñ (m as in text) °न भावितं; K0 M °न श्रावितं; K3 M हवि D1 T2 G3 °न श्रावि°; G1.2.4-6 °नाश्रावि°. K3 M हवि (for हव्यम्). — b) Ñ V1 B (except B6) D (except D °याजाभिमंत्रि°; G3 °याजनिमंत्रि°. — c) Ñ3 G1 कामात सं°; G2 (corrupt) कथाम्र सं°. — d) Ñ V1 B1.2.3 Dn विप्रेहि; B6 चै प्रैहि. Ś1 सा त्वेवं तिष्ठ; K0 साध्वे त्वं तिष्ठ K1 मत्वेवं प्रीहि; K3 साध्वेवं प्रैहि; K4 साध्येवं तिष्ठ; T2 G (except G3) M2.3 पृषति (G1 M5 °षती; G3 °पंति; M पृषति) प्रैहि. Ś1 K3 D5 प्रैहि; G3 याहि (for तिष्ठ). D मां (for वा).

37 Ś1 K1 वैशंपायनः; Ñ1.3 B1.6 वैशं° उ°; S ब्राह्मणः (G2 M2.3 om. the ref.). — a) Ś1 °मुक्तस्तु; K1 Ñ °मुक्तेन; Ñ1.2 V1 B D G4 °मुक्त्वा तु. — c) K3 G1 संस्तुते; Dn1.n2 D1 सत्कृते.

38 a) T2 G1.4.5 महा (for घोर°). — b) D4 वर्म. — c) D1.2 T G सखड्गं सशरं. — d) T2 G (except G1) धनुषा. Ś1 त्रिमदः; D1 विधुवन्(!); G3 ह नद्न्.

39 a) Ś1 सोप्यारुह्य; K3 सोभ्यारो°; S आप्या(G

05 7.51 1.84 तौ दृष्ट्वा पृषती याजं प्रपेदे वै सुतार्थिनी ।
न वै मदन्यां जननीं जानीयातामिमाविति ॥ ४७
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ।
तयोश्च नामनी चक्रुर्द्विजाः संपूर्णमानसाः ॥ ४८
धृष्टत्वादत्यधृष्णुत्वाद्धर्माद्द्युत्संभवादपि ।
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ ४९
कृष्णेत्येवाब्रुवन्कृष्णां कृष्णाभूत्सा हि वर्णतः ।
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ॥ ५०
धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् ।
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ॥ ५१
अमोक्षणीयं दैवं हि भावि मत्वा महामतिः ।
तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात् ॥ ५२

इति श्रीमहाभारते आदिपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

---

T1 °ष्णां कृष्णाभूत्सा ह वर्णतः (cf. 50ab). ]
— Ms–8 om 46cd; T2 G om. 46c–48b. With 46cd cf. 1696*. — c) Ś1 B1.6 T1 M8.5 चैनान्. B6 °संयुक्तान्.

47 B3 T2 G om. 47 (cf. v. l. 44, 46). — a) Ś1 K1 तां (for तौ). Ñ3 V1 B (B3 om.) D (except Da1 D5) T1 पार्षती (for पृष°). Ś1 K राजन् (for याजं). — b) Ś1 K प्रपेदे हि; M प्रतिपेदे. — d) Ś1 जनेया°; K0 जानीयै°; M °नीये°. Ś1 K1 °मामिति.

48 B3 om. 48 (cf. v. l. 44); T2 G om. 48ab (cf. v. l. 46). — a) D5 °त्युक्त्वा तु. K1 Da3 Dn D1 तं (for तां). — After 48ab, M6–8 ins. 1700* (cf. v. l. 46). — d) K (except K1) ते (for सं°).

49 B3 om. 49 (cf. v. l. 44); G3 om. 49ab. — a) Ś1 K0.2.3 transp. धृष्ट° and धृष्णु°. K1 Ñ1.3 B (B3 om.) Da D2.4.5 T G4–6 °तिधृष्टत्वात्; K4 °दप्र (B3 om.) ... Ñ2 V1 °दत्यमर्षित्वात्; G1.2 °दप्रधृष्यत्वात् द्युम्नत्वात्; — b) K1 द्युम्नं बलं भवाद्; K3 धृष्टाद्युत्सं°; K4 धर्मार्थोत्सं°; Ñ2.3 V1 Dn D1.5 द्युम्नाद्यु°; T1 धर्मद्युम्नभ°; G1 धर्माद्युम्नोद्भ°. K4 K1.3 G2.3.6 इति (for अपि). — K3 om. 49cd. — c) K4 °रोसौ. Ś1 K2 (hapl.) om. from भव° to द्रुपदस्य in 50d. — d) T2 G4–6 अयं; M6.8 इह (for इति). K0 D5 °स्य महात्मनः; G3 °दस्याभवत्स्वयं. ✿Dev.: धृष्टत्वात् धृतिहेतुत्वादिति अक्षरसाम्यादर्थसाधर्म्यमथा(द)र्थान्तरमतिपत्तिनिगमः। एकारसाधर्म्याद् धृतिहेतुत्वं गम्यते। अतिधृष्टत्वादतिप्रागल्भ्याद् ॥ इति व्याकरणव्युत्पत्तिः। अतिप्रागल्भ्यं च मर्थ (corrupt) कवचस्य समर्थ(? corrupt)स्योत्पत्तिः [।] धर्मार्थधर्माद् द्युम्नत्वा(? read द्युम्ना)दित्यपि निगमः। धर्मार्थकामानां तु संभव उत्तयः(।) अत्र द्युकारसाधर्म्याद् ॥ — Arj. (corrupt): धृष्टत्वात् अतिधृष्टत्वाद् धर्माद् (।) द्युत्संभवादपीति [।] धृष्टत्वाद् तेजस्वित्वाद् सहिष्णुत्वाद्। धर्माद् आमद्‌पाद्। द्युत्संभवादग्निसंभवादित्यर्थः ॥ द्युशब्दोऽग्निवाची [।] द्योतत इति द्युत् क्विप्। धृष्टत्वादतिधृष्ट(sic)त्वात् इति पाठे धृष्ट(? read धृष्ण)त्वाद्(।) धृतिहेतुत्वात्। एकारसाधर्म्यात्(॥) धृतिहेतुत्वं गम्यते॥ अतिधृष्टत्वादतिप्र[ा]गल्भ्यादिति व्याकरणव्युत्पत्तिः। अतिप्रागल्भ्यं च सरथकवचधनुर्बाणस्य सम्भवस्य जातत्वात्[॥] ध(र)र्माद्द्युत्संभवादिति च पाठे धर्मार्थकामानामुत्सव (? read मुत्संभव) उद्भवो यस्मात्॥ अत्र द्युम्नसाधर्म्यं अत्र (? read अर्थं)प्रतिपादने। एकैकमक्षरं गृहीत्वा ... इति धातो रूपमेतत्साध्यं [॥] द्युम्नभवादिति यदुपुस्तकेषु पाठः [।] स च प्राचीनटीकाकृतामस्वरसतो हेय एवेति [॥] — Nīl.: धृष्टत्वात्प्रगल्भत्वात्। धृष्णुत्वादिति पाठे ... शक्तत्वात्। अत्यंतं अमर्षः। शत्रूत्कर्षासहिष्णुत्वं ... द्युम्नं वित्तं तच्च राज्ञां बलमेव कवचकुंडलादिकं वा ... तदादिर्यस्य शस्त्रास्त्रशौर्योत्साहादेस्तत् द्युम्नादि तस्य ... उत्कर्षेणोत्पत्तेश्च ॥✿

50 B3 om. 50 (cf. v. l. 44). — After 50ab, M6–8 ins.:

1701* निषण्णकर्पणाद्भूमे रसाद्य हविषोऽभवद् ।

— a) K0.3.4 transp. तथा and तत्. G1 अथ (for तथा). Dn1 G1 तं; T1 तु (for तन्). — d) G3 महामखे.
— After 50, K3.4 ins.:

1702* क्रियासु चैव सर्वासु कृतवान्द्रुपदेन ह ।
वैदिकाध्ययने पारं धृष्टद्युम्नो गतः परम् ॥

while S ins.:

1703* धृष्टद्युम्नस्तु पाञ्चालान्सिंहनादेन नादयन् ।
सोऽभ्यारोहद्रथवरं तेन संप्रययौ गृहम् ।
कृष्णा च शिबिकां प्राप्य प्रविवेश निवेशनम् ।

[ (L. 1) M (except M6) मंदयन्. — (L. 2) = (cf.) 39ab. T2 G4–6 सोऽभ्यरो°. G2.3 गृहान्. ]

51 B3 om. 51 (cf. v. l. 44). — a) K1.2.4 T2 ... च; G3 स (for तु). D6 T1 G1 पांचालं; T2 °ल्यो; G1 °लो; G4.6 °ली. — b) T1 G1 अभयत्. K0.3 सु (K3 स्व)निवेशनं; Da1 Dn3 D1 G4.6 M6 स्वनिवे°. — After 51ab, M6–8 ins.:

1704* द्रोणः संप्रेषयामास शत्रुः पुत्रगुरुस्तथा ।

D6 (marg. sec. m.) S ins. after 51cd (M6–8 after 1704*):

1705* द्रोणं संप्राप्य विधिवद्धनुर्वेदमधीतवान् ।

# १५६

वैशंपायन उवाच ।
एतच्छ्रुत्वा तु कौन्तेयाः शल्यविद्धा इवाभवन् ।
सर्वे चास्वस्थमनसो बभूवुस्ते महारथाः ॥ १
ततः कुन्ती सुतान्दृष्ट्वा विभ्रान्तान्गतचेतसः ।
युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी ॥ २
चिररात्रोषिताः स्मेह ब्राह्मणस्य निवेशने ।
रममाणाः पुरे रम्ये लब्धभैक्षा युधिष्ठिर ॥ ३
यानीह रमणीयानि वनान्युपवनानि च ।
सर्वाणि तानि दृष्टानि पुनः पुनररिंदम ॥ ४
पुनर्दृष्टानि तान्येव प्रीणयन्ति न नस्तथा ।
भैक्षं च न तथा वीर लभ्यते कुरुनन्दन ॥ ५
ते वयं साधु पाञ्चालान्गच्छाम यदि मन्यसे । C. 1. 6415 B. 1. 168. 6 K. 1. 183. 7

परिदाय तु तं शिष्यं धृष्टद्युम्नं तु सोमकः ।
अहो राज्ञः प्रसीदेति प्राब्रुवन्प्रियवादिनः ।
महाप्रभावो ब्रह्मर्षिर्ज्ञात्वा तस्य च संभवम् ।
[ (L. 1) T1 G2.3 °पूजयामास विधिवद्गुरुधर्मतः. — (L. 2) G1.2 कृतं (for तु तं). D4 T2 G1.4-6 सोमकाः. — (L. 3) T1 G2.3 अस्त्राख्याणि; G1 अहोरात्रं; M3.5 अथो रा°. G3 च सर्वाणि; G3 प्रदेयानि. T1 G2.3 प्राब्रवीत्प्रियवादिनं. ]
— °) G3 °स्वभेदान्.

52 B3 om. 52 (cf. v. l. 44). — a) T2 G1.4-6 न; G2 क (for अ-). Ś1 च; K0.2.3 तु; K4 तत् (for हि). — b) Ś1 K स तु; T1 G2.3 भाव्यं (for भावि). D2 भावित्वाच्च. T1 महाजनाः; G2.3 °मनाः; M2.6.7 °द्युतिः; M3 °नृपिः. — c) K0.4 D3 transp. तथा and तत्. M7 अथ (for तथा). Cd as in text. — d) Ś1 K1.2 D1 °र्त्यानु°; T1 M °र्त्यर्थं°; T2 G °कीर्त्यर्थंकारणात् (G2 °कीर्तिः सुरक्षणात्). Cd cites कीर्त्यनुरक्षणं. — After 52, D4 (marg. sec. m.) ins.:

1706* सर्वाख्याणि स तु क्षिप्रमास्तवान्दृष्टमात्रतः ।

Colophon. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 B3 चैत्ररथ (followed by द्रौपदीसंभव). K1.2.4 Ñ3 B1.3 Da Dn D1.2.4 (all om. the sub-parvan name) mention only द्रौपदीसंभव (B1 एकचक्रायां द्रौपदीसंभव; D4 संभव). — *Adhy. name:* Ś1 K0.3.4 धृष्टद्युम्नोत्पत्तिः; D5 धृष्टद्युम्नद्रौपदीसंभवः. — *Adhy. no.* (figures, words or both): Dn3 166; D4m 169; T1 161; T2 G3.4.5 114; G1 116; G2 111; G6 M 115. — *S'loka no.:* Dn 56; M3 58.

☞ After adhy. 155, D4 (marg. sec. m.) ins. a passage of 31 lines given in App. I (No. 94); while S ins. a different passage given in the same App. (No. 95).

## 156

1 Ś1 K (except K0) D3 S om. उवाच. — a) G6 M एवं श्रुत्वा. T1 G1-4 ततः सर्वे (for तु कौ°). T2 G5 तच्छ्रुत्वा पांडवाः सर्वे; Cd as in text. — After 1a, T G ins.:

1707* पाण्डवा भरतर्षभ ।
मनसा द्रौपदीं जग्मुरनङ्गशरपीडिताः ।
ततस्तां रजनीं राजन्-
[ (L. 1) T2 G4.6 ब्राह्मणात्संशितव्रतात्. ]
— b) K0 D5 शल्यप्रोताः; Cd as in text. — cd) Ñ2 V1 B D (except D5) °बलाः (for °रथाः). T1 G1-3 व्युष्टायां दुर्मनाभूताश्चास्वस्थमनसोभवन्.

2 b) Ś1 K1 Ñ1.3 विक्रांतान्; G1 विख्यातान्. G3 गतचेतनान्. Ñ2 V1 B D सर्वांस्तद्गतचेतसः. — d) K0.2.4 D4.5 सत्यवादिनं.

3 Before 3, Ś1 K1 T2 G1.4-6 ins. कुंती; K4 Ñ2.3m V1 B D कुंत्युवाच. — a) Ś1 K1 दिनारान्युषिताः; M3.5 चिरकालो°. Cd cites चिरराग्नं. — d) Ś1 K B (except B5) Cd लब्धलक्ष्याः; (B1m °भक्ष्या); D2 भक्ष्यं बहु. Ñ3 V1 B Da Dn D1 महात्मनः; D4 महाबलाः (for युधि°).

4 a) G3 वा (for इह). — c) K (except K1) D2 G2 तानि सर्वाणि (by transp.); T1 G1.3 सर्वाण्येव तु. M3 युक्ता° (for दृष्टा°).

5 Ś1 om. 5cd, reading 5ab after 6ab. — a) K1 पुरा दृष्टानि; K4 Ñ V1 B Da Dn पुनर्द्रष्टुं हि (K4 न); D1 पुनर्दृष्टं हि. Ñ1.2 V1 B D (except D3.5) इह; G4.5 एवं (for एव). — b) B1.5 D1 प्रेरयंति. K3.4 B3 D1.2.3 मनस्तथा. T1 G1-3 M6-8 तथा न प्रीणयंति च. — c) Some MSS. भैक्ष्यं. — d) B6 Da M कुरुपुंगव.

6 ab) K0 om. 6cd, reading 6ab after 7ab. K1 Ñ3.3 V1 B6 Da D5 पंचालान्. D2 G1-3 गच्छामः पांचालान् (transp.). After 6ab, Ś1 reads 5ab. — G2 (hapl.)

29 31 क्षमा मां भजते तस्माद्रम्यतां यदि रोचते ॥ २८

गौरुवाच ।

किं नु त्यक्तास्मि भगवन्यदेवं मां प्रभाषसे ।
अत्यक्ताहं त्वया ब्रह्मन्न शक्या नयितुं बलात् ॥२९

वसिष्ठ उवाच ।

न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते ।
दृढेन दाम्ना बद्धैष वत्सस्ते ह्रियते बलात् ॥ ३०

गन्धर्व उवाच ।

स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ।
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ घोरदर्शना ॥ ३१
क्रोधरक्तेक्षणा सा गौर्हम्भारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्वशः ॥ ३२
कशाग्रदण्डाभिहता काल्यमाना ततस्ततः ।
क्रोधदीप्तेक्षणा क्रोधं भूय एव समादधे ॥ ३३
आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ ।
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालधितो महत् ॥ ३४
असृजत्पह्लवान्पुच्छाच्छकृतः शबराञ्शकान् ।
मूत्रतश्चासृजच्चापि यवनान्क्रोधमूर्छिता ॥ ३५
पुण्ड्रान्किरातान्द्रमिडान्सिंहलान्बर्बरांस्तथा ।
तथैव दरदान्म्लेच्छान्फेनतः साससर्ज ह ॥ ३६

---

28 Ś1 K1 S om. उवाच (T1 om. the ref.). T1 G2 read 28 after 24 (cf. v. l. 23). — a) G6 वीर्यं (for तेजो). — b) Ñ1.3 Dn3 T1 G2.3 M transp. क्षमा and बलं. — c) B D2 मे; M (except M8) मा (for मां). B D3 वव्रुणे (for भजते). Ñ1.2 V1 Dn D1.5 T2 G3–6 यस्माद्. — After 28, T1 G2 *repeat* $26^{ab}$, which is followed by 1766* (cf. v. l. 26).

29 T1 G2 read 29 after 27 (cf. v. l. 23). — K1 T1 G1 M om. उवाच; G3 om. the ref. Ñ3 V1 B3.6 D (except D1.5) नंदिन्युवाच; T2 G3–6 नंदिनी; G2 कामधेनुः (for गौरु°). — b) Ś1 K1.3.4 सं°; Ñ2 V1 B6 Da Dn D1 त्वं (for मां). B1.3.5 D2.4 त्वया ब्रह्मर्षिसत्तम. — c) Ś1 B5 अमुक्ता°; T2 G5 नात्यक्ता°; G2.4.6 न त्यक्ता°. — d) Ś1 K न शक्या नेतुमंजसा (K0 °मोजसा); Ñ3 V1 B D नेतुं शक्या न पै बलात्; T1 G2 नेतुं शक्या बलान्न हि; T2 G1.4–6 शक्या नेतुं बलादितः.

30 Ś1 K1.3 S om. उवाच. — b) G1 रोच° (for शक्य°). — c) K0 D2 T1 G2 एव (for एष). — d) Ś1 K1 अपि (for ते). Ś1 आह्रियते; M नीयते. — After 30, S ins.:

1767* येन केनाप्युपायेन त्वया वत्सो निवार्यताम् ।

31 Ś1 K1 S om. उवाच (G2 M3.8 om. the ref.). — b) Cf. $15^{b}$. D4 T2 G5 M3 (*inf. lin.* as in text) यशस्विनी. — c) D5 ऊर्ध्वीकृत°; Cd as in text. — d) T1 G2 सा बभौ; G1.4.5 प्रभावाप्. Ñ1.3 S चारु°; Ñ3 V1 B D रौद्र°.

32 a) D5 क्रोधदीप्ते°. — b) N3 Da °राव°; B6 हुंबा°; D4 हुंभा°; T2 °स्वनैः; T2 G3–6 हुंकारवघनैः स्वनैः; G1 हुंभारावघनैः स्वनैः; G2 हुंकारवघनस्वनैः; M हुंभाराव(M5.8 °रव)घनस्वनैः. — d) K4 विद्रावयति; D4 द्रावयामास; T1 G1.3 प्राद्रा°; G5 विद्रा°; M6–8 प्रद्रा°.

33 $33^{ab}$ = (var.) $22^{ab}$. — a) Ś1 K1.2 कषा(K1 °शा)दंडप्रतुदिता; K0.3.4 कशादंड(K4 °डैः)प्रव्यथिता; Ñ1 अभ्रदंडप्रणिहिता; B1.6 कषाग्र° (B1m पाषाण°); B5 कशा° दंडप्रतिहता. — c) Cf. $32^{a}$. Ñ1.2 V1 B D T2 G1.3 M क्रोधरक्तेक्षणा (D3 °णात्). Dn3 D4.5 सा गौः (for क्रोधं). — d) Ś1 पुनरेव; Dn3 D4.5 क्रोधं भूयः (for भूय एव). K0 समाययौ; Ñ1.2 V1 B5.6 Dn1.n2 D1.4 T2 G1.3.5 °दधे.

34 b) K0.3.4 दीप्तरश्मिवपुर्यथा. — d) T1 वालव्य° जनवीजनैः; T2 G3–6 मुहुर्वातान् (G4 °वैर्व; G6 °र्वातैः) मुखाद्वमन्; G2 वालव्यसनजीविनैः; G5 मुहुर्वालाधिकं महत्; M मुहु(M6 बहु)र्वालधिनो (M3 °ना) महत्. — After 34, Ś1 K1 ins. an additional colophon.

35 Before 35, Ś1 K1 ins. गंधर्वः (cf. v. l. 34). — a) D5 स बहून्; T1 M पलवान्; T2 G पल्लवान्. G1 — b) Ñ V1 B D S प्रस्रवात् म्लेच्छान् (for पुच्छात्). — b) Ñ V1 B D S प्रस्रवात् (for शकृतः); see below. Ñ3 V1 B D द्राविडान् (for शबरान्). — After $35^{ab}$, Ñ3 V1 Dn S ins.:

1768* योनिदेशाच्च यवनाञ्छकृद्देशाच्छकांस्तथा ।
[ Ñ3 V1 Dn °च्छकृतः शबरान्बहून्. ]

— c) K (except K1) M सासृज°; G2 सासृजत्. Ñ1 म्लेच्छान्; Ñ3 V1 B3 कांचित्; B1.4.6 D कांचीन् (Dn1 कांचिं; Dn2 कांचीत्; Dn3 कांचीर्) (for चापि). — After $35^{abc}$, K3 ins.:

1769* बर्बरांश्चैव पार्श्वतः ।
प्राणतः मारजचैवं.

— d) T2 G1.3–6 M नंदिनी (for यवनान्); cf. 1765*. K0.3 Ñ3 °मूर्छितान्. Ñ3 V1 B D शबरां(B1 शरबां; Dn1 D1.5 शरभां)श्चैव पार्श्वतः; T1 G2 म्लेच्छानाश्रितशिखरकान्.

36 a) K4 पुंड्रान्; Ñ1.2 V1 B D पौंड्रान्; G2 आंध्रान्.

तैर्विसृष्टैर्महत्सैन्यं नानाम्लेच्छगणैस्तदा ।
नानावरणसंछन्नैर्नानायुधधरैस्तथा ।
अवाकीर्यत संरब्धैर्विश्वामित्रस्य पश्यतः ॥ ३७
एकैकश्च तदा योधः पञ्चभिः सप्तभिर्वृतः ।
अस्त्रवर्षेण महता काल्यमानं बलं ततः ।
प्रभग्नं सर्वतस्त्रस्तं विश्वामित्रस्य पश्यतः ॥ ३८
न च प्राणैर्वियुज्यन्त केचित्ते सैनिकास्तदा ।
विश्वामित्रस्य संक्रुद्धैर्वासिष्ठैर्भरतर्षभ ॥ ३९
विश्वामित्रस्य सैन्यं तु काल्यमानं त्रियोजनम् ।
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ॥ ४०

दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा ।
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ॥४१
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
बलाबलं विनिश्चित्य तप एव परं बलम् ॥ ४२
स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम् ।
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ॥ ४३
स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा ।
तताप सर्वान्दीप्तौजा ब्राह्मणत्वमवाप च ।
अपिबच्च सुतं सोममिन्द्रेण सह कौशिकः ॥ ४४ C. 1. 6605 B. 1. 175. 48 K. 1. 191. 60

इति श्रीमहाभारते आदिपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

---

K (except K1) Ñ1 G3 द्रविडान्; Ñ2 V1 B D यवनान्. — $^{b}$) K4 G3 transp. सिंह° and बर्ब°. T1 G2 तुलुष्कान् (for सिंह°). M8 मालवान्. Ñ2 V1 B3 Dn1 D1.2 खसान्; B1.2.6 Da Dn2.n3 D4.5 खशान्; G3 तदा. — After 36$^{ab}$, Ñ2 V1 B D ins.:

1770* चिबुकांश्च पुलिन्दांश्च चीनान्हूणान्सकेरलान् ।

— $^{c}$) Ñ1 शबरान्; Ñ3 T2 G1.2-5 M6-8 दर्दुरान्; G6 बर्बरान्; M8 दर्दुरान्; M6 बर्बुरान् (for दरदान्). Ñ2 V1 B D ससर्ज फेनतः (B1 Da शकृतः) सा गौः; T1 G2 पारसीकांश्च सिंहांश्च. — $^{d}$) K4 योनि°; G3 पार्श्व°; M6 क्षीर°; M6-8 फेनकान् (for फेन°). Ś1 संससर्ज सा. Ñ2 V1 B D म्लेच्छान्बहुविधानपि.

37 $^{a}$) K3 B1.6 Dn3 D1.2 G3 महासैन्यं; Ñ V1 B3 Dn1.n3 D4.5 महासैन्यैर्. — $^{b}$) Ś1 Ko B1.5 D4.5 T G M8 तथा (for तदा). — G6 om. 37$^{cd}$. — $^{c}$) B1 T2 G1.3.4 नानाभरण°. — $^{d}$) T2 G1.4 °युधशतैस्; G6 °युधशरैस्. T1 G2 अपि; G6 तदा. — $^{e}$) Ś1 S (except T1 G4) अवकी°. D5 तत्सैन्यं; T1 G2.3 M संनद्धैर्. — $^{f}$)–38$^{f}$. D5 संरब्धैर्म्लेच्छकोटिभिः. — After 37, T1 ins. 1771* (cf. v. l. 38).

38 D1 om. 38; T1 reads 38 after line 17 of a passage given in App. I (No. 97). — $^{a}$) K4 एकैकः स; S °कैकशस्. T2 G1.4-6 तस्य; G3 तथा (for तदा). Da योधैः; D6 S योधाः. — $^{b}$) D6 S वृताः. — $^{c}$) K (except K1) Ñ1.3 T2 G1.4.6 M शस्त्र°; G3 शर°. T1 G2 महता शरवर्षेण. — $^{d}$) Ñ1 मथ्यमानं; Ñ2.3 V1 B D (D1 om.) T2 G1.4-6 वध्य°; T1 G2.3 M हन्य°. K3 हि तत्; Ñ2.3 V1 B D (D1 om.) तदा. — $^{e}$) K3 Ñ1 G3 M सर्वशस्. Ś1 तत्र (for त्रस्तं). K1 °ग्नं सर्वशस्त्रैस्तु; Ñ3 °ग्नं सर्वशस्त्रं हि; T1 G2 °ग्नं सर्वशस्त्रास्त्रं; T2 G1.5 °ग्नदर्पं संत्रस्तं; G4.6 °ग्नं दर्पसत्रस्तं. — S ins. after 38 (T1, after 37):

1771* तस्य तच्चतुरङ्गं वै बलं परमदुःसहम् ।
प्रभग्नं सर्वतो घोरं पयस्विन्या विवर्जितम् ।

39 $^{a}$) T1 G1.4.5 स्म (for च). K1.2 Ñ3 G2.4 M2.5 व्ययुज्यंत; K3 Ñ3 V1 B D °ज्यंते; K4 व्यमुंचंत; Ñ8 विमुच्यंत. — $^{b}$) K1 ततः (for तदा). Ñ1 B3 Da D1.3.4 केचित्तत्रापि सैनिकाः; Ñ2 V1 B1.2.5 Dn D5 °चित्तत्रास्य सैनिकाः; Ñ3 किंचित्ते सैनिकं तदा; S तदा (G3 तत्र) केचन सैनिकाः. — D1 om. 39$^{c}$–41$^{b}$; K3 om. 39$^{cd}$. — $^{c}$) G4 वैश्वामित्रैश्च. Ś1 K (K3 om.) Ñ1.3 G2 संक्रुद्धाः. — $^{d}$) Ś1 K1 वासिष्ठौ; Ko Ñ1.3 G3 वासिष्ठाः; K2.4 वसिष्ठाः; G2 वासिष्ठो. G4 चैव भारत (for भर°). — After 39, Ś1 K2.4 Ñ1.3 V1 B (except B1) Dn D4(om. posterior half).5 ins.:

1772* सा गौस्तत्सकलं सैन्यं कालयामास दूरतः ।

40 D1 om. 40 (cf. v. l. 39); D4 om. 40$^{a}$. — $^{a}$) Ñ2.3 V1 B D (D1.4 om) तत्सैन्यं (for सैन्यं तु). — $^{cd}$) M6 °नं भृशोद्विग्नं त्रा° नाधिगच्छति. — A passage given in App. I (No. 97) is ins. in D4 (marg. *sec. m.*) T2 G (except G3) after 40, in T1 after 41$^{ab}$. — In T1 G2 this passage is followed by a *repetition* of 41$^{ab}$.

41 D1 om. 41$^{ab}$ (cf. v. l. 39). — $^{a}$) G6 trans दृष्ट्वा and तत्. M6-8 तु (for तन्). — $^{b}$) Ko.4 T1 G2 M °तेजोद्भवं बलं (Ko.4 तदा); T2 G1.4-6 °तेजोबलं च (=42$^{b}$). — After 41$^{ab}$, T1 ins. a passage given i App. *I* (*No. 97*). — $^{c}$) Ś1 क्षत्रबलान्.

# १६६

गन्धर्व उवाच ।

कल्माषपाद इत्यस्मिँल्लोके राजा बभूव ह ।
इक्ष्वाकुवंशजः पार्थ तेजसासदृशो भुवि ॥ १
स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात् ।
मृगान्विध्यन्वराहांश्च चचार रिपुमर्दनः ॥ २
स तु राजा महात्मानं वासिष्ठमृषिसत्तमम् ।
तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ॥ ३
अपश्यदजितः संख्ये मुनिं प्रतिमुखागतम् ।

---

42 ᵇ) Ś1 K3 Ñ1 °तेजोद्भवं बलं (cf. v. l. 41ᵇ); Ko.2.3 m.4 °तेजो महद्बलं; Ñ3 °तेजो वरं ब°. — ᶜ) Ko.3 4 D2 S बलाबले. — ᵈ) Ñ1 G1 M6–8 transp. परं and बलं. D5 महत् (for परं).

43 ᵃ) Ś1 K1 दीप्तं; G2 स्थितं (for स्फीतं). G3 स्वराज्यस्थितमु°. — ᵇ) B D5 दृप्तां (for दीप्तां). — ᵈ) Ñ1 D1 S (except M3.5) तप एव. T1 G1 3 समा- (for मनो). T2 G3–6 ददे.

44 ᵃ) Ś1 transp. स and गत्वा. Ñ1 स लब्ध्वा तपसः सि°. — ᶜ) T G M6–8 लोकांश्च (for दीप्तौजा). M3 तताप सर्वलोकांश्च; M5 °प दीप्तवीर्यौजा. — ᵈ) G2 M6–8 ह; M5 सः (for च). Ñ2 V1 B5.6 D (except D5) °त्वमवाप्तवान्. — ᵉ) K4 Ñ2 V1 B D ततः; T1 G2–4 हुतं; G1 स्तुतं; Cd सुतं (as in text). Ś1 °वत्सततं सो°; K1 पिबश्च सततं सो°. — After 44, S ins.:

1773* एवंवीर्यस्तु राजर्षिर्विप्रर्षिः संबभूव ह ।

Colophon om. in T2 G3–6. — *Major parvan:* G1.2 M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ, followed by वासिष्ठ; T1 संभव. Ś1 K1–3 Ñ3 B Da Dn1.n2 D1.2.4.5 (all om. the sub-parvan name) mention only वासिष्ठ (K2 कौशिक; M वसिष्ठोपाख्यान). — *Adhy. name:* Ko.4 वसिष्ठ(K4 om. it)धेनुहरणं. — *Adhy. no.* (figures, words or both): Dn2 174, Dm 176; T1 173; G1 126, G2 124; M 125. — *S'loka no.:* Dn1.n2 47; M3 52. — *Aggregate s'loka no.:* Dn2 6666.

## 166

Before 1, D4 (marg. *sec. m.*) S (G3 om. lines 3–6; D4 M om. lines 7) ins.:

1774* अर्जुनः ।
कस्योरस्तु वरस्ते वैर विश्वामित्रवसिष्ठयो. ।
बभूव गन्धर्वपते ब्रूहि तत्सर्वमेव च ।
माहात्म्यं च वसिष्ठस्य ब्राह्मण्यं ब्रह्मतेजसः ।
विश्वामित्रस्य च तथा क्षत्रियस्य महात्मनः । [5]
न शृण्वानस्त्वहं तृप्तिमुपगच्छामि खेचर ।
आख्याहि गन्धर्वपते विचित्राणीह भाषसे ।
माहात्म्यं च वसिष्ठस्य विश्वामित्रस्य भाषसे ।

[ D4 अर्जुन उ°. — (L 2) M6–8 शंस (for ब्रूहि). G1 M मे (for च). — (L 4) T1 G2 ब्राह्मण्यं प्राप्तमेव च; G1.4 M3.5 क्षत्रस्य च महा°. — (L. 6) T1 G2 सत्कथासार मेव च; T2 G1.3.4.6 शंस (T2 G6 ब्रूहि) तत्सर्वमेव मे (for विचित्रा° etc ). — (L. 7) T1 G2 विचित्राणि च; G3.6 विचित्राणीह (for विश्वा°). ]

1 Ś1 K1 S om. उवाच. — After गन्धर्वः (resp. its v. l.), D4 (marg. *sec. m* ) S *repeat* (with variation) 1. 165. 2 (v. l.: पुण्यमुत्तमं for परिचक्षते, and विश्रुतं वि for यथावत्तन्). — ᵃ) Ñ3 V1 B D (except D4) एवं (for अस्मिन्). — ᶜ) S इक्ष्वाकूणां कुले जातः. — ᵈ) Ś1 K1 तेजसाप्रतिमो. — After 1, T1 G6 ins.:

1775* नास्ति तत्र महाराज वैश्वानरसमद्युते. ।

2 ᵃ) K1 T1 G1.3 M वने. T1 G1.3 M रम्ये (for राजा). — ᵇ) Ś1 K1 Ñ1 पुरा (for पुरात्). S मृगयाम- चरद्बली. — ᶜ)=1. 165. 5ᶜ. T1 G1.3 M निघ्नन् (for विध्यन्). — ᵈ) Ś1 K1 °मर्दन; S रिपुसूदनः. — After 2, K3.4 Ñ1.2 V1 B D ins.:

1776* तस्मिन्वने महाघोरे खड्गांश्च बहुशोऽहनत् ।
हत्वा च सुचिरं श्रान्तो राजा निववृते ततः ।

K3.4 Ñ1.2 V1 B D cont.: Ś1 Ko.1 Ñ3 ins. after 2:

1777* अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान् ।

[ Ś1 Ko.1.2.4 °यत. Cd cites याज्यार्थे. Ś1 Ko.1.4 °मित्रस्य पश्यतः. ]

3 G3 om. 3ᵃᵇ. — ᵃ) Ś1 K (except K3) च (for तु). — ᵇ) D1 मुनि° (for ऋषि°). — ᶜ) D4 transp. तृषा° and क्षुधा°. Ñ1 D3 D1.3.4 तृष्णार्तश्च; S स तृष्णा( M3.5 °षा )र्तः. — ᵈ) Ś1 K अप्येकायन° (K3 °कार्यं स); T2 G3.5 एकयान°.

4 ᵃ) Here and below N spells the name (mostly) as शक्ति. Here, only Ko.4 B1.6 Da2 शक्ति; but cf. as शक्ति.

शक्तिं नाम महाभागं वसिष्ठकुलनन्दनम् ।
ज्येष्ठं पुत्रशतात्पुत्रं वसिष्ठस्य महात्मनः ॥ ४
अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् ।
तथा ऋषिरुवाचैनं सान्त्वयञ्श्लक्ष्णया गिरा ॥ ५
ऋषिस्तु नापचक्राम तस्मिन्धर्मपथे स्थितः ।
नापि राजा मुनेर्मानात्क्रोधाच्चापि जगाम ह ॥ ६
अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः ।
जघान कशया मोहात्तदा राक्षसवन्मुनिम् ॥ ७
कशाप्रहाराभिहतस्ततः स मुनिसत्तमः ।
तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्च्छितः ॥ ८
हंसि राक्षसवद्यस्माद्राजापसद तापसम् ।
तस्मात्त्वमद्य प्रभृति पुरुषादो भविष्यसि ॥ ९
मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम् ।
गच्छ राजाधमेत्युक्तः शक्तिना वीर्यशक्तिना ॥ १०
ततो याज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः ।
वैरमासीत्तदा तं तु विश्वामित्रोऽन्वपद्यत ॥ ११
तयोर्विवदतोरेवं समीपमुपचक्रमे ।
ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् ॥ १२
ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः ।
ऋषेः पुत्रं वसिष्ठस्य वसिष्ठमिव तेजसा ॥ १३
अन्तर्धाय तदात्मानं विश्वामित्रोऽपि भारत ।
तावुभावुपचक्राम चिकीर्षन्नात्मनः प्रियम् ॥ १४
स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः ।
जगाम शरणं शक्तिं प्रसादयितुमर्हयन् ॥ १५ C. 1. 6714 S. 1. 176. 19 K. 1. 192. 25

---

other ref. below. K3 शकुणं सुमहा°. — d) Ñ2 V1 B Da Dn D1.2.4 °कुलवर्धनं. — ef) Ñ2 V1 B D transp. पुत्रश° and पुत्रं. T1 G2 °शतानां च वासिष्ठानां °त्मनां.

5 b) M6-8 एनं (for एवं). — c) Ś1 K Ñ1.2 तथैवर्षिर्; S स चाप्यषिर्. K (except K1) B (except B6) D3 T G2-6 इदं (for एनं). — After 5, K0.3.4 Ñ1.2 V1 D (except Da) S ins.:

1778* मम पन्था महाराज धर्म एष सनातनः ।
राज्ञा सर्वेषु धर्मेषु देयः पन्था द्विजातये ।

[ Before line 1, S ins. शक्तिः. — (L. 2) K0.3.4 S धर्मेण (for सर्वेषु). K0 संकल्पाद्; K3.4 संकल्प्य; T1 G2.5 संदिष्टो; T2 G1.3.6 M संकल्पो; G4 सदृष्टो (for धर्मेषु). ]

K4 Ñ1.2 V1 Dn D1.3.4 S cont.: B Da ins. after 5:

1779* एवं परस्परं तौ तु पथोऽर्थे वाक्यमूचतुः ।
अपसर्पापसर्पेति वागुत्तरमकुर्वताम् ।

6 Before 6, S ins. गंधर्वः. — K1 lacuna for 6a. — a) D5 शक्तिस्तु; T1 G3 स ऋषिर्. Ś1 यत्तु शक्तिर्महाभागः (marg. sec. m. न चोवाच मुनिः किंचित्). — b) K4 तीर्थपथे; Ñ1 धर्मपथि; Ñ3 °र्म्ये पथि; G3 महापथे; Cd as in text. — c) S om. न. G4 तु तत् (for मुनेः). B6 D5 वाक्यात्; T G (except G3.5) मार्गात्; Cd मानात् (as in text). — d) B3 क्लेपाच; B5 D4.5 क्रोधं च; S क्रोधाच्च (G1 °धेन). K2 Ñ1.3 B5 (m as in text) Da1 S अप-; Ñ3 V1 B1.6 Da2 Dn1.n2 D1 अथ (for अपि).

7 b) S (except M3) ऋषिं नृपतिसत्तमः. — G3 (hapl.) om. 7c–13b. — c) Here and below Ś1 K1 Da कषा- for कशा-. — d) S (G3 om.) नृपो (for तदा).

8 G3 om. 8 (cf. v. l. 7). — b) S (G3 om.) राजानं (for ततः स). Ś1 K1-3 Ñ1.3 D5 मुनिपुंगवः; S (G3 om.) ऋषिस°. — c) K0 transp. तं and शशाप. T1 रुपाविष्टो (for नृप°).

9 G3 om. 9 (cf. v. l. 7). Before 9, T G1.3–6 M6–8 ins. शक्तिः. — a) T2 G1.5.6 यन्मां (for यस्माद्). G4 हंसि राजन्स्वयं यन्मां. — b) K1 S °पशद.

10 G3 om. 10 (cf. v. l. 7). — a) Ś1 K1 G3 मानुष्य°; D1.5 T1 °विशिता°. Ś1 K1 मत्तः (for सक्तः). — d) Ś1 K B1 Da शक्रिणा.

11 G3 om. 11 (cf. v. l. 7). — a) T G1.4.5 तत्र (T1 यत्र) मार्गे°; G3.6 M6–8 तत्र राज्य°. Cd cites याज्यः. — b) T G1.4.5 भूपवासिष्ठयोस्तदा (T1 °ष्ठोर्यदा). — c) T2 G1–6 यदा. K0.4 D4 तत्र; K3 G3 तत्तु. — d) S (G3 om.) °त्रोन्वविंदत (M3 5 °त्रोऽभ्यपद्यत). Cd cites अनुपद्यत.

12 G3 om. 12 (cf. v. l. 7). — a) T G (G3 om.) M6 एव (for एवं). — c) Ś1 (sup. lin. as in text) °रात्ततपाः; Ñ1 °स्त्रश्रवाः.

13 G3 om. 13ab (cf. v. l. 7). — b) Ś1 K1 G3 M6–8 °सत्तम. — c) G1.2 ऋषिपुत्रं. T1 G2 transp. ऋषेः पुत्रं and वसि°. — d) Ś1 K (except K2) °ष्ठसमतेजसं.

14 a) K0.4 तमात्मा°; K2 Ñ2 V1 B (except B6) D (except D2) ततोत्मा°; G3 तथात्मा°. — b) B5 (m as in text) हि; S तु (for अपि). — c) Ñ2 V1 B5 D4.5 अति; D1 अपि; G3 अभि; G4.6 अप- (for उप-). — d) D4 G6 चिकीर्षुर्.

15 a) Ñ3 M6–8 तथा (for तदा). — b) Ś1 K B

तस्य भावं विदित्वा स नृपतेः कुरुनन्दन ।
विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति ॥ १६
स शापात्तस्य विप्रर्षेर्विश्वामित्रस्य चाज्ञया ।
राक्षसः किंकरो नाम विवेश नृपतिं तदा ॥ १७
रक्षसा तु गृहीतं तं विदित्वा स मुनिस्तदा ।
विश्वामित्रोऽप्यपक्रामत्तस्माद्देशादरिंदम ॥ १८
ततः स नृपतिर्विद्वान्रक्षन्नात्मानमात्मना ।
बलवत्पीड्यमानोऽपि रक्षसान्तर्गतेन ह ॥ १९
ददर्श तं द्विजः कश्चिद्राजानं प्रस्थितं पुनः ।
ययाचे क्षुधितश्चैनं समांसं भोजनं तदा ॥ २०
तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा ।
आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्तमिति सान्त्वयन् ॥ २१
निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम् ।
इत्युक्त्वा प्रययौ राजा तस्थौ च द्विजसत्तमः ॥ २२
अन्तर्गतं तु तद्राज्ञस्तदा ब्राह्मणभाषितम् ।
सोऽन्तःपुरं प्रविश्याथ संविवेश नराधिपः ॥ २३
ततोऽर्धरात्र उत्थाय सूदमानाय्य सत्वरम् ।
उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् ॥ २४
गच्छामुष्मिन्नसौ देशे ब्राह्मणो मां प्रतीक्षते ।
अन्नार्थी त्वं तमन्नेन समांसेनोपपादय ॥ २५

(except B3) Da Dn1 D1 शक्त्रिणा. T G M6-8 अथ (for वै). M3.5 °ना नृपसत्तम. — After 15ab, K4 ins.:

1780* तस्थौ तत्र च राजा तु सविषादो बभूव ह ।

— c) K3.4 B Da2 D1 शक्ति. S राजा (for शक्ति). — After 15, K4 D5 ins.:

1781* शापान्तो द्वादशे वर्षे तव राजन्भविष्यति ।
उक्तस्तु शक्त्रिणा राजा स तु तत्रैव संस्थितः ।

[ D5 शापांतो तव राजर्षे द्वादशाब्दे भवि°, and ययौ स शक्तेरनयात्स तु तत्रै°. ]

16 a) Ś1 K (except K3) तं; Ñ1.3 G1 M तु (M4 च) (for स). — b) K2 Ñ2 V1 B (except B1) D (except D5) कुरुसत्तम. — c) Ś1 K (except K3) तदा (for ततो). — d) Ś1 K1 संदि°.

17 a) K2 Ñ2 V1 B D (except D5) शापात्त(K2 °पांत)स्य तु; Ñ3 स शापं त°. Ś1 K1 विप्रस्य; Dn3 T1 G3 राजर्षेर्. — G1 om. 17c-18b. — d) K0.3.4 ततः (for तदा).

18 G1 om. 18ab (cf. v. l. 17). — a) K2 Ñ2 V1 B3 Da Dn D1 transp. तु and तं. Ñ1 रक्षसांतर्गृ°; T1 G2 राक्षसेन गृ°. K3.4 D4.5 तु (for तं). — b) Ñ3 ऋषिः (for मुनिः). Ñ1.3 ततः (for तदा). K2 Ñ2 V1 B D °स्वा मुनिसत्तमः. — c) Ś1 K0.1.3 Ñ1.3 D5.6 M3.5 °त्रोपचक्राम; K2 Ñ2 V1 B Da Dn1.n3 G1-3.5 °त्रोप्यपाक्रा°; K4 °त्रोपि चक्राम; D1 G6 °त्रोप्युपक्रा°.

19 a) K2.3 Ñ2 V1 B D तेन (for विद्वान्). — b) Ś1 K1 रक्षंतात्मा°; K0 रक्षत्यात्मा°; K2.3 Ñ2 V1 B D रक्षसां- K4 Ñ1.3 रक्षसात्मा°. — c) Ś1 बलवान्; K4 तर्गतेन धि; K3.3 Ñ2 V1 B D पीडितः पार्थ. — d) Ś1 बलात्सं-. K0.1.4 च (for ह). K2.3 Ñ2 V1 B D नान्वबुध्यत किंचन.

20 a) Ñ2 V1 B3 Da Dn D1 अथ; T1 G2.3 तद (for तं). K2.3 B1.2.3 D3.4.5 अथ तं ब्राह्मणः क°. — b) Ś1 तदा; Ñ2.3 V1 B6 Da Dn D1 वनं (D1 °ने); M4 पथि (for पुनः). K2.3 B1.2.3 D4.5 दृष्ट्वा पार्थिवसत्तमं; D5 दृष्ट्वा पार्थ वसन्वने. — c) Ñ2 V1 B D अयाचत क्षुधापन्नः.

21 a) K (except K3) Ñ1.3 D5 T1 G1.3 M स (for अथ). — Before 21cd, M6-8 ins. राजा. — c) Ś1 K (except K1) Ñ1.3 V1 B6 Da1 Dn D1.2.4 T G M1.5 आस्व; Ñ1 आस्तां; D5 M6-8 आस्थ; Cd आसु (sic). G3 अद्य (for अत्र). — d) Ś1 S (except G3.5 M3) इव (for इति). Ś1 K (except K3) चिंतयन् (for सान्त्व°). Ñ3 V1 B5 D (except D3.4.5) °तं प्रतिपालयन्.

22 a) S विनिवृत्तः प्रदास्या°. — c) K0 स (for प्र°). — d) K0.3.4 D5 S (except G1.2.6) स; K1 Ñ1.3 तु (for च).

23 a) T1 G2 M6-8 °गतं ततो राजा; T2 G3.5 M3.5 °गतस्ततो राजा; G1.6 अंतःपुरं गतो राजा; G2 अंतस्तस्तु तदा. — b) T1 G1.3 M ततो (for तदा). K0.3.4 राजा. — c) K3 om. सः. — d) S न सस्मार (for संवि°). — For 23, K2 Ñ2 V1 B D subst.:

1782* ततो राजा परिक्रम्य यथाकामं यथासुखम् ।
निवृत्तोऽन्तःपुरं पार्थ प्रविवेश महामनाः ।

The st. (23) is preserved intact only in the Kaśmīrī (Śāradā) version !

24 b) T1 G2 आहूय (for आनाय्य). K3 Ñ3 S त्वरया; G6 °च वचनं स्मृ°. (T2 as in text; G4-6 सत्तमः). — d) Ñ1.3 प्रतिश्रयं; B1.6 प्रतिष्ठितं; D5 परिश्रुतं; B4.5 Cd as in text.

25 Before 25, S ins. राजा. — a) K3 गच्छ यस्मिन् (? B3 अस्मिन्नास्ते; D2 G3 °च्छ तस्मिन्; D5 °च्छामुष्मन्; ?) G1.6 °च्छामोऽस्मिन्; तत्र तस्मिन्. K2 Ñ2 V1 B D (except D5)

एवमुक्तस्तदा सूदः सोऽनासाद्यामिषं क्वचित् ।
निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः ॥ २६
राजा तु रक्षसाविष्टः सूदमाह गतव्यथः ।
अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥ २७
तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनाम् ।
गत्वा जहार त्वरितो नरमांसमपेतभीः ॥ २८
स तत्संस्कृत्य विधिवदन्नोपहितमाशु वै ।
तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने ॥ २९
स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः ।
अभोज्यमिदमित्याह क्रोधपर्याकुलेक्षणः ॥ ३०
यस्माद‍भोज्यमन्नं मे ददाति स नराधिपः ।
तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपा ॥ ३१
सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा ।
उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ॥ ३२
द्विरनुव्याहृते राज्ञः स शापो बलवानभूत् ।
रक्षोबलसमाविष्टो विसंज्ञश्चाभवत्तदा ॥ ३३
ततः स नृपतिश्रेष्ठो राक्षसोपहतेन्द्रियः ।
उवाच शक्तिं तं दृष्ट्वा नचिरादिव भारत ॥ ३४
यस्मादसदृशः शापः प्रयुक्तोऽयं त्वया मयि ।
तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं मानुषानहम् ॥ ३५
एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयुज्य सः ।
शक्तिनं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ॥ ३६
शक्तिनं तु हतं दृष्ट्वा विश्वामित्रस्ततः पुनः ।
वसिष्ठस्यैव पुत्रेषु तद्रक्षः संदिदेश ह ॥ ३७ C. 1. 6736 B. 1. 176. 41 K. 1. 192. 43

— c) Ko.1 Ñ V1 B (except B3) Da Dn D3.4 transp. त्वं and तं. Ś1 तत् (for तं). D5 S अस्त्राधिनं त्वम° (M6-8 तम°). — d) Ñ1 °नोपहारय.

26 Before 26, Ś1 S (except M3.5) ins. गंधर्वः; Ko.4 Ñ3 V1 B4.6 D (D5 after corr.) गंधर्व उ°; K1.3 धौम्य°; Ñ1.2 B3 D5 (before corr.) वैशं° उ°. — a) Ñ2 V1 B (except B3) Da Dn1.n2 D3.4 ततः (for तदा). — b) Ś1 K (except K2) D2.5 विद्यते नामिषं क्व°. — c) Ñ2 S (except G3.4) पुनः (for तदा).

27 a) T1 G1 महीपो (for राजा तु). B1.3 D2 G3 M5 राक्ष°. — c) Ko.4 D2.5 अथैनं; G4 असेन.

28 a) K1 D5 G1 पुनः (for ततः). — c) Ś1 K1 त्वरितं. — d) G4 °सं व्यपेत°.

29 a) K3 B1.5 D2.4 T2 G2.6 ततः; K3 स च; K4 D5 स तु; Ñ1.2 V1 Dn एतत् (for स तत्). T1 G3 तत्संस्कृत्य च वि°. — b) Ñ V1 °श्लोपहृत°; B1.3 °नापिहि°; S अन्नं सामिषमाशु वै. Cd cites अपिहितं..

30 a) Ś1 (orig.) समृद्धश्च°; Ś1 (sup. lin.) K4 समिद्धश्च°; K1 स तृप्तश्च°; B3 संसिद्ध°; M4 स दिव्य°. Cd cites सिद्धचक्षुषा (as in text). T G M3.6-8 स दिव्यचक्षुर्दृष्ट्वा तु (T1 G2 तत्). — b) T1 G3 अभोज्यं (for सदन्नं). — c) K3 B (except B6) D1 न (for अ-). S अभोज्यमिति मत्वाह (G1 °थ) (T1 G3 स मानुषामिषं ज्ञात्वा). — d) T1 G2 निजगाद रुषान्वितः.

31 Before 31, K4 B D ins. ब्राह्मण उ°. — b) Ś1 K (except K2) D5 M3 transp. ददाति and स. Ñ3 V1 B3 D (except D1.5) S नृपाधमः (for नरा°). — c) G3 अस्यैव. G6 मुग्धस्य. — d) K4 B5 D5 G3 M6-8 लोलुपः (G3 °पं); T1 G1.2 लोलता; G4 लोभता; Cd as in text.

32 a) Ś1 K (except K1) °मांसस्य. — b) Ś1 K1.3 S °थोक्तं. Ś1 K B Da2 D1 शक्रिणा. Ñ3 V1 D5 तथा (for पुरा).

33 Before 33, S ins. गंधर्वः. — a) K Da B1 Cd °व्याहृतो; T1 G1.2 द्विजेन व्या°; M6-8 द्विरप्युद्य°. K (except Ko) Ñ1 राजा; S शप्ये. — b) Ś1 K Ñ2.3 ततः स व°; S शापो हि (G3 M3 -पि) ब°. — d) K3 Ñ1.2 V1 B D (except D5) नृपः (for तदा).

34 a) S °सिः पार्थ. — b) Ko.3.4 Ñ2.3 V1 B6 Dn D1.4.5 S रक्षसा. Ko Ñ1.2 V1 Dn1.n2 T G3-6 M अपहृतेंद्रियः; K3-4 Ñ3 Da D1 उपह°; B6 D5 G1.2 अपह°. — c) Some MSS. शक्रिणं. T1 G2.3 M6-8 दृष्ट्वा तं (by transp.); T2 G1.4-6 M3.5 दृष्ट्वा तु.

35 Ko om. 35ab. — a) K4 Dn2 D2 M3 पाप°. — b) T1 G3 यस्; G2 स (for अयं). K3.4 Ñ3 V1 B D (except D5) transp. त्वया and मयि. — d) Ñ3 V1 Dn D5 पुरुषान्; D1 मानवान्.

36 Before 36, M6-8 ins. गंधर्वः. — b) Ko-2.4 B3 Da D2.4.5 S °प्रयोज्य. K4 Ñ2.3 V1 Dn च (for सः). K3 तं च प्राणैर्वियोज्य च. — c) Ś1 Ko.1.3.4 Da Dn1 शक्त्रियं; K2 D1.3.4 T1 G2 तं शक्तिं; B सं शक्तिं; G3.4 शक्तिं तं.

37 a) Ś1 K Da शक्रिणं; B तं शक्तिं; D2-4 T1 G3 तं

2/49 स ताञ्शतावरान्पुत्रान्वसिष्ठस्य महात्मनः ।
भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव ॥ ३८
वसिष्ठो घातिताञ्श्रुत्वा विश्वामित्रेण तान्सुतान् ।
धारयामास तं शोकं महाद्रिरिव मेदिनीम् ॥ ३९
चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः ।
न त्वेव कुशिकोच्छेदं मेने मतिमतां वरः ॥ ४०
स मेरुकूटादात्मानं मुमोच भगवानृषिः ।
शिरस्तस्य शिलायां च तूलराशाविवापतत् ॥ ४१
न ममार च पातेन स यदा तेन पाण्डव ।
तदाग्निमिद्ध्वा भगवान्संविवेश महावने ॥ ४२
तं तदा सुसमिद्धोऽपि न ददाह हुताशनः ।
दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः ॥ ४३
स समुद्रमभिप्रेत्य शोकाविष्टो महामुनिः ।
बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदम्भसि ॥ ४४
स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः ।
जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ॥ ४५

इति श्रीमहाभारते आदिपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

---

शक्तिं; G3 शक्तिं तं; G4 शक्तिं तु. K (except K1) B D2.4.5 G4 निहतं; Ñ2 V1 Da Dn D1 तु मृतं; T1 G2 भक्षितं. — b) K0.2 ततस्ततः; Ñ2 V1 B D पुनः पुनः.

38 a) Ś1 K3 Ñ1 D6 G1.2.6 शतवरान्; K4 Ñ3 V1 B6 Da2 Dn D1.2.4 M6–8 शक्तयव°; B1.3 शक्तयव°; Da1 शक्तव°; G3.5 शतान्व°.

39 a) T1 G2 स्वपुत्रान्खादिता°. — b) S स्वान्सु° (T1 G2 रक्षसा). — c) K0 S क्रोधं; K2–4 कोपं; D5 क्रुद्धं (for शोकं); cf. 1. 167. 7 etc. — d) T1 G2 सुमेरुरिव.

40 a) D5 प्राण° (for चात्म°). — b) Ś1 M8 मतिं (for बुद्धिं). D5 ऋषिसत्तमः; S मुनिपुंगवः. K (except K1) बुद्धिं नृपतिसत्तमः. — c) K3 Ñ2.3 V1 B D (except D5) कौशिको°. T1 G2 न तस्योच्छेदनं मेने. — d) T1 G2 मुनिं (for मेने). Ś1 K (except K3) D5 मेने स मुनिपुंगवः (K0 D5 °सत्तमः).

41 a) Ñ1 सुमेरु°. — b) B1.3 मुमुचे. — c) Ñ1 V1 B D गिरेः (for शिरः). Ś1 K Ñ1.2 V1 Dn तु (for च). G1 शूलस्य च शिखायां च; G6 शिरसस्तस्य निलयं. — d) K3.4 D1 G1 तूलराशिम्.

42 a) M8 transp. न and ममार. T1 G3 स (for च). — b) S तदा स (G1 स तदा; G3 निपाते) मुनिसत्तमः (T1 G2 तदा मुनिवरोत्तमः). — c) B3 तद्; S (except T1) तथा. Ñ2.3m V1 B D (except Da) इद्धं; Cd इद्ध्वा (as in text). K (except K1) तदा (K4 इया) मिमध्ये. — d) K3 महामुनिः; G1 °नले.

43 a) Ś1 K1 तथा. K0 स; K1 स्व; G1 सु (for सु). — c) K3.4 T2 G (except G2) M8 °प्र:. G1 [ऽ]ग्निः. — d) K3.4 Da.1 T G M3.6–8 तदा (for तत॰). M8 शीतशिरोऽग्निरभूत्तदा.

44 a) K1.3 Ñ V1 B D (except Da) G1.2 °प्रेक्ष्य. Ś1 K4 समुद्रमभिसंप्रेत्य. — b) D5 क्रोधावि°. — After 44ab, K4 reads 1. 167. 1cd, repeating it in its proper place. — K3 om. 44c–45b. — c) T2 G2–6 transp. बद्ध्वा and कण्ठे. — d) N (except B1.5 D3; K3 om.) T1 G3.5 M3 तदांभसि; M6–8 महां°.

45 K3 om. 45ab (cf. v. l. 44). — After 45ab, Ñ1 D2 (marg. *sec. m.*) ins.:

1783* न ममार तदा विप्रः कथंचित्संशितव्रतः ।

— c) Ś1 K1 च ततः; K0.2–4 स तदा; S (except M6–8) सततं.

Colophon om. in B5. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ, followed by वासिष्ठ; T1 संभव. Ś1 K0.1.3 Ñ3 B1.2.6 Da Dn D1.2 M3 (all om. the sub-parvan name) mention only वासिष्ठ (M3 वसिष्ठोपाख्यान). — *Adhy. name:* K0.4 वसिष्ठशोक°. — *Adhy. no.* (figures, words or both): Dn3 175; D1m 177; T1 174; T2 G3–5 125; G1 127; G6 M 126. — *S'loka no.:* Dn 49; M3 50. — *Aggregate s'loka no.*. Dn3 6714.

## 167

1 Ś1 K1 S om. उवाच. D3 वैशं° उ°. — a) S (except T1 G1–3) स आश्रमपदं दृष्ट्वा. — c) K1.2.4 पुत्रैर्विरहितं मुनिः; M6–8 °तं तैर्महामुनिः. — d) Ñ3 V1 B D (except D5) Da1 Dn3 स (for सु-). T2 G3–6 अपि (for पुन).

2 a) D5 T2 G6 पुण्यां (for पूर्णां). — b) G1 °हे तद्दांभसा. — c) S (except T1 G1.2) पुष्करिणी (G1 °रुंसुगन्धिनः); K4 °स्मंस्य)लगीरादीन्. — d) Ś1 K0–2 Da1 T1 G1 वहंतीः;

# १६७

गन्धर्व उवाच ।

ततो दृष्ट्वाश्रमपदं रहितं तैः सुतैर्मुनिः ।
निर्जगाम सुदुःखार्तः पुनरेवाश्रमात्ततः ॥ १
सोऽपश्यत्सरितं पूर्णां प्रावृट्काले नवाम्भसा ।
वृक्षान्बहुविधान्पार्थ वहन्तीं तीरजान्बहून् ॥ २
अथ चिन्तां समापेदे पुनः पौरवनन्दन ।
अम्भसस्या निमज्जेयमिति दुःखसमन्वितः ॥ ३
ततः पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः ।
तस्या जले महानद्या निममज्ज सुदुःखितः ॥ ४
अथ छित्त्वा नदी पाशांस्तस्यारिबलमर्दन ।
समस्थं तमृषिं कृत्वा विपाशं समवासृजत् ॥ ५
उत्ततार ततः पाशैर्विमुक्तः स महानृषिः ।
विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ॥ ६
शोके बुद्धिं ततश्चक्रे न चैकत्र व्यतिष्ठत ।
सोऽगच्छत्पर्वतांश्चैव सरितश्च सरांसि च ॥ ७
ततः स पुनरेवर्षिर्नदीं हैमवतीं तदा ।
चण्डग्राहवतीं दृष्ट्वा तस्याः स्रोतस्यपातयत् ॥ ८
सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा ।
शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ॥ ९
ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना ।
मर्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ ॥ १०
वध्वादृश्यन्त्यानुगत आश्रमाभिमुखो व्रजन् ।
अथ शुश्राव संगत्या वेदाध्ययननिःस्वनम् ।
पृष्ठतः परिपूर्णार्थैः षड्भिरङ्गैरलंकृतम् ॥ ११　C. 1. 6756 B. 1. 177. 12 K. 1. 193. 13

---

वहतीं; Ñ1.2 V1 B Dn D3.4 G3 हरंतीं; D2 हरंती; D6 वहती. B6 द्रुमान् (for बहून्).

3 M6–8 om. $3^{ab}$. — b) Ñ1 M3.5 मुनिः (for पुनः). Ñ3 V1 B D (except D5) T1 G3–6 कौरव°. — c) Ś1 K1 Ñ1.2 B5 G1 अंभसस्यां; M3 अस्यां नद्यां. D5 अंभस्यंगानि म°. — d) D5 M5 अतिदुःख°.

4 a) Ś1 तथा (for ततः). Ñ1 इव; G1 M6–8 तथा (for तदा). — b) Ś1 K दृढं; D5 दृढैर्. — c) K2 तस्मिन् (for तस्या). — d) G3 न्यमज्जत्स (for निम°). K3 G1 स (for सु-).

5 a) Ś1 K1 अवच्छि°; T1 G2 ततश्छि°; G3 अथ भि°. — b) B6 Dn D1 °बलसूदन. — c) Ñ3 V1 B D T G स्थलस्थं; M6 समर्थं. G4 नीत्वा. — d) T G सा समा(G3 समपा)सृजत्.

6 a) Ñ1 महा-; M6–8 जलात् (for ततः). — b) Ś1 K1.2 G3 महामुनिः (see below). — Ś1 K3 (hapl.) om. $6^{cd}$. — d) K (K1 om.) Ñ3 B6 D5 M (except M3) महामुनिः (see above); G3.4 महातपाः. — After 6, D4 (marg. *sec. m.*) S ins.:

1784* सा विपाशेति विख्याता नदी लोकेषु भारत ।
ऋषेस्तस्य नरव्याघ्र वचनात्तस्य धीमतः ।
उत्तीर्य च ततो राजन्दुःखितो भगवानृषिः ।

7 a) Ñ3 B2.3 Dn D1 शोक°. Ñ3 V1 B6 D (except D1) तदा; G6 तु तां (for ततः). T1 G2 शोकाविष्टं मनश्चक्रे. — b) G1 चैकत्राप्यतिष्ठ°. — cd) Ś1 स गच्छन्; S (except G1.2) सोपश्यत्. D4 transp. पर्वतान् and सरितः.

8 a) K4 Ñ3 V1 B1.2.6 दृष्ट्वा (for ततः). S (except G2 M5) च (for स). B5 स दृष्ट्वा पुन°. — c) Ñ3 V1 B D भीमां (for दृष्ट्वा). — G1 (hapl.) om. $8^{d}$–$10^{a}$. — d) Ñ V1 Dn D1 °स्यपातयत्; B Da D3.4.5 °स्यथापतत्; S (G1 om.) स्रोतस्यात्मानमात्मना (cf. $10^{b}$). — After 8, S (except G1) ins.:

1785* मज्जयामास शोकार्तो मरणे कृतनिश्चयः ।

9 G1 om 9 (cf. v. l. 8). — b) T2 G4–6 M उपलभ्य (for अनुचिन्त्य). — c) Ñ3 T1 G2 तस्माच्.

10 G1 om. $10^{a}$ (cf. v. l. 8). — b) S (except G3) आत्मानमृषिसत्तमः (cf. v. l. $8^{d}$). — c) Ś1 शक्यतेत्यु°; Ñ V1 B D (except D1) शक्यामीत्यु°. — d) D6 °रेव समाययौ. — After 10, N T1 G2–3 ins:

1786* स गत्वा विविधाञ्शैलान्देशान्बहुविधांस्तथा ।

11 ab) Ś1 K4 °दृश्यंत्यानुगत; K1 °दृश्यत्यनु°; Ñ1.2 °दृश्यंत्यानुगम्य. T2 G5.6 M °मुखं. K0.4 °खो व्रजेत्; K3 °खो ययौ; Ñ6 °खोगमत्. Ñ3 V1 B D (except D5) अदृश्यंत्याप्यया वध्वाथा(B5 Da D3 °ध्वा आ)श्रमेनुसृतो ऽभवत्; T1 G2.3 अदृश्यंत्यागतश्रीमानाश्रमाभिमुखो ययौ; G1 अपि दृश्यागतश्रीमानाश्र° °खो ययौ. — M7 (hapl.) om.

6757 177. 13 193. 14 अनुव्रजति को न्वेष मामित्येव च सोऽब्रवीत् ।
अहं त्वदृश्यती नाम्ना तं स्नुषा प्रत्यभाषत ।
शक्तेर्भार्या महाभाग तपोयुक्ता तपस्विनी ॥ १२

वसिष्ठ उवाच ।

पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।
पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ १३

अदृश्यन्त्युवाच ।

अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते ।
समा द्वादश तस्येह वेदानभ्यसतो मुने ॥ १४

गन्धर्व उवाच ।

एवमुक्तस्ततो हृष्टो वसिष्ठः श्रेष्ठभागृषिः ।
अस्ति संतानमित्युक्त्वा मृत्योः पार्थ न्यवर्तत ॥१५

ततः प्रतिनिवृत्तः स तया वध्वा सहानघ ।
कल्माषपादमासीनं ददर्श विजने वने ॥ १६
स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत ।
आविष्टो रक्षसोग्रेण इयेषात्तुं ततः स तम् ॥ १७
अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्माणमग्रतः ।
भयसंविग्नया वाचा वसिष्ठमिदमब्रवीत् ॥ १८
असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः ।
प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति भीषणः ॥ १९
तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन ।
त्वदृतेऽद्य महाभाग सर्ववेदविदां वर ॥ २०
त्राहि मां भगवन्पापादस्माद्दारुणदर्शनात् ।
रक्षो अत्तुमिह ह्यावां नूनमेतच्चिकीर्षति ॥ २१

इति श्रीमहाभारते आदिपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

11c–13b. — c) K2 °र्थं; Ñ2.3 V1 B D °र्थं.

12 M7 om. 12 (cf. v. l. 11). — a) K1 अन्वव्रजत. — b) Ś1 K Ñ3 मामित्यथ; G1.3 मामिहेति. Ñ1 तु; Ñ2 V1 B D G1.3 अथ (for च). — c) K0 अहं नाम्ना त्वदृश्यंती; K2 °हं त्वदृश्यंती ना°; K3 अदृश्यंतीं त्वहं ना°; K4 °हं तु दृशती ना°; Ñ1 अहमित्यदृती ना°; Ñ2 V1 B D अहमित्यदृश्यं(D1 °शं)तीमं (B3 Da अहाहमित्यदृश्यंती); Ñ3 अहमित्यनुदृश्यंती; S अदृश्यंत्यहमित्येव. — d) Ñ3 V1 B (except B3) D सा; Ñ3 तत् (for तं). M प्रत्युवाच ह. — e) K2.3 G3 शक्ति(G3 °क्ति)भार्या; B (except B6) Da D1 शक्तेर्भार्या. T2 G1.4–6 M transp. शक्तेर् and भार्या. Ś1 K0 B3 Da D4 T1 G1.2.4 M °भागा. — f) Ñ1 S मन(T1 G2.3 यश)स्विनी.

13 M1 om. 13ab (cf. v. l. 11). Ś1 K1 S om. उवाच. — a) M3 भद्रे (for पुत्रि). T1 G2.3 पुत्रस्यैष हि सांग°. — b) Ś1 K1 °ध्वनिः; Ñ1 B6 Da D4 S (except G4; M7 om.) वेदाध्ययननिःस्वनः. — c) Ś1 K B (except B6) Da Dn1 शक्तेरिव. Ś1 M श्रुतं.

14 S (except T1 G1) om. उवाच. K1 D1 अदृश्यु°. — a) Ñ3 पुत्र (for अयं). K1 Ñ3 समोत्पन्नः. — c) Ś1 K Da शक्तेर्. — c) G1.3 तस्यैव. — d) Ñ2.3 V1 B D (except D4) T1 G1.3 M2.3 °भ्यस्यतो; G3 °भ्यासितो. S (except G2.3) तात (for मुने).

15 Ś1 K S om. उवाच (G1 M2.3 om. the ref.). — a) K (except K1) D4 तदा; Ñ2 V1 B6 Da Dn D4 तया (for ततो). — b) T1 G3 भगवानृषिः; T2 G1.4–6 श्रेष्ठभागिनीं; G5 श्रेष्ठवागृ°. — d) Ś1 K D4 मार्गात्; पथि; T1 G3 पाशात्; G3 प्रति- (for पार्थ). K0 अवर्त K2.3 G3 निव°.

16 a) K3 तु; T1 G2.3 सन् (for स). — b) T2 G अदृश्यंत्या सहायवान्. — c) G3 आयांतं (for आसीनं). — d) K3 गहने वने; G5 विपिने तदा.

17 a) Ś1 K0–3 Ñ1 B1.3 स च; T1 G3 मुनिं. G1.6 तां (for तं). K4 स दृष्ट्वैव ततो राजा. — c) राक्षसेंद्रेण. — d) K2.3 स (for स्त). K0 ह (for तं) K1 ततः स्मृतः; Ñ1.3 V1 B D तदा मुनिं; S अथौजसा. इयेषादयितुं तदा.

18 a) Ś1 अदृश्यती; K2.3.4 T2 °शंती. T1 G3 अपि (for तु). — b) T2 G1.4–6 घोर° (for क्रूर°). Ś1 उग्रतं. T1 G2.3 अध्वनि (for अग्रतः). — c) K0.3.4 °संदिग्धया.

19 Before 19, S (except G2.3) ins. अदृश्यंती. — b) B3 भगवान्मुने. — c) T2 G3 अदृश्येन; G3 प्रगृहीतेति-. S घोरेण. — d) Ñ3 V1 B D (except D4) दारुणः (for भीष°).

20 ab) Ñ1 transp. शक्तो and नान्यो. Ś1 [ऽ]स्ति भुवनत्रये; Ñ1 भुवि कथंचन. — c) K1 त्वदृतेस्य; Ñ1 B1 G3 त्वामृतेद्य; M3 दृश्यते°.

21 a) Ñ2.3 V1 B D G3–5 पाहि. — b) K0.3 Ñ3 M6–8 तस्माद्. — c) M2.3 रक्ष. Ś1 K Ñ1 मामत्तुं; Ñ2 M6–8 आहरितुं (for अत्तुमिह). T2 अस्वायां; G3 अस्वायम्.

# १६८

वसिष्ठ उवाच ।

मा भैः पुत्रि न भेतव्यं रक्षसस्ते कथंचन ।
नैतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितम् ॥ १
राजा कल्माषपादोऽयं वीर्यवान्प्रथितो भुवि ।
स एषोऽस्मिन्वनोद्देशे निवसत्यतिभीषणः ॥ २

गन्धर्व उवाच ।

तमापतन्तं संप्रेक्ष्य वसिष्ठो भगवानृषिः ।
वारयामास तेजस्वी हुंकारेणैव भारत ॥ ३
मन्त्रपूतेन च पुनः स तमभ्युक्ष्य वारिणा ।
मोक्षयामास वै घोराद्राक्षसाद्राजसत्तमम् ॥ ४
स हि द्वादश वर्षाणि वसिष्ठस्यैव तेजसा ।
ग्रस्त आसीद्गृहेणेव पर्वकाले दिवाकरः ॥ ५
रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत् ।
तेजसा रञ्जयामास संध्याभ्रमिव भास्करः ॥ ६
प्रतिलभ्य ततः संज्ञामभिवाद्य कृताञ्जलिः ।
उवाच नृपतिः काले वसिष्ठमृषिसत्तमम् ॥ ७
सौदासोऽहं महाभाग याज्यस्ते द्विजसत्तम ।
अस्मिन्काले यदिष्टं ते ब्रूहि किं करवाणि ते ॥ ८

वसिष्ठ उवाच ।

वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि तत् ।
ब्राह्मणांश्च मनुष्येन्द्र मावमंस्थाः कदाचन ॥ ९

राजोवाच ।

नावमंस्याम्यहं ब्रह्मन्कदाचिद्ब्राह्मणर्षभान् ।
त्वन्निदेशे स्थितः शश्वत्पूजयिष्याम्यहं द्विजान् ॥ १० C. 1. 6770 B. 1. 177. 3 K. 1. 168. 24

---

(for छायां). $\tilde{N}_2$ $V_1$ B D राक्षसोयमिहात्तुं वै; $T_1$ $G_{1.2}$ राक्षसोत्तुमयं ह्या°; $G_3$ राक्षसात्तु भयं नायान्; $G_4$ अमर्षात्वत्तु-मित्याह; $G_6$ राक्षसोत्तुमिहाभ्यायान्. — $^d$) $T_2$ G (except $G_3$) चिकीर्षितं. $\tilde{N}_2$ $V_1$ B D नूनमावां समीहते ($B_1$ महीपते).

Colophon om. in $K_2$ $\tilde{N}_2$ $V_1$ $B_1$ Dn $D_{1.6}$. — *Major parvan:* $T_2$ G M संभव° (for आदि°). — *Sub-parvan:* $T_1$ संभव. $Ś_1$ $K_{0.1.3.4}$ $\tilde{N}_3$ $B_{3.5.6}$ Da $D_{2.4}$ $M_5$ (all om. the sub-parvan name) mention only वासिष्ट ($M_5$ वसिष्ठोपाख्यान). — *Adhy. no.* (figures, words or both): $D_4$m 178; $T_1$ 175; $T_2$ $G_{2-5}$ 126; $G_1$ 128; $G_6$ M 127. — *Śloka no.:* $M_8$ 24.

## 168

1 $Ś_1$ K S om. उवाच. — $^a$) $T_2$ $G_3$ पुत्रि त्वया न भे°; $G_1$ न त्वया पुत्रि भे°. — $^b$) $\tilde{N}_2$ $V_1$ B D राक्षसात्तु ($D_2$ °से); $T_1$ $G_2$ रक्षसोस्मात्; $G_3$ राक्षसेषु. — $^c$) $Ś_1$ तद् (for एतद्). $T_1$ $G_2$ मुंच; $G_1$ तस्मात् (for यस्मात्). — $^d$) $K_3$ समुन्थि° (for उपस्थि°). $T_1$ $G_2$ यं पश्यसि पुरः स्थितं.

2 $^a$) $T_1$ $G_2$ असौ (for अयं). — $^b$) S (except $T_1$ $G_{2.3}$) वीर्येण. — $^c$) $Ś_1$ एतस्मिन्; $G_3$ एवास्मिन्.

3 $Ś_1$ $K_1$ S om. उवाच ($G_{1.6}$ om. the ref.). — $^a$) S (except $T_1$ $G_{2.3}$) सक्रुद्धं (for संप्रे°). — $^d$) $Ś_1$ K $D_5$ पार्थिवं (for भार°).

4 $^a$) $Ś_1$ मुनिः; $K_{0.3.4}$ $D_5$ $M_5$ ततः (for पुनः). — $^b$) $K_{0.4}$ तदाभ्यु°. $\tilde{N}_1$ $D_2$ $T_1$ $G_{2.4}$ स($T_1$ $G_2$ त)मभ्युक्ष्य च वा°. — $^c$) $T_2$ $G_{1.4-6}$ M transp. वै and घोराद्. $\tilde{N}_2$ $V_1$ B D (except $D_5$) वै शापात्; $\tilde{N}_3$ वै तस्मात्; $T_1$ $G_2$ राजानं. — $^d$) $\tilde{N}_2$ $V_1$ B D (except $D_5$) तस्माद्योगा(B Da $D_{1.2}$ °द्घोरा)न्नराधिपं; $T_1$ $G_2$ रक्षसो घोरदर्शनात्.

5 $^b$) K (except $K_1$) S (except $G_{3.5}$ $M_5$) वासि°. $K_{1.3}$ $G_1$ इव; $G_2$ च (for एव). — $^c$) $K_{0.1}$ $D_4$ $T_1$ $G_{1.3.5}$ एव (for इव).

6 $^a$) $Ś_1$ $\tilde{N}_3$ $G_3$ विप्रयुक्तो. — $^b$) $K_4$ $T_1$ $G_2$ नृपति-स्तद्वनं. — $^d$) $T_1$ $G_{2.3}$ संध्याभ्राणीव.

7 $^a$) $B_6$ प्रज्ञाम्. — $^b$) $M_5$ प्रणिपत्य (for अभि°).

8 $G_3$ om. $8^{ab}$. — $^a$) $\tilde{N}_3$ महामन्त्र. — $^b$) $K_4$ $\tilde{N}_2$ $V_1$ B D (except $D_5$) मुनि° (for द्विज°). — $^c$) $Ś_1$ $K_3$ यस्मिन्. $Ś_1$ K (except $K_0$) वै; $B_{1.6}$ तु (for ते). — $^d$) $G_3$ ब्रह्मन् (for ब्रूहि). $K_0$ $B_1$ Da तत् (for किं). $K_0$ करवाम. $K_0$ $B_{3.6}$ $D_3$ $D_{4.5}$ किं (for ते).

9 $Ś_1$ K S om. उवाच. — $^a$) $K_2$ कृतम्; B $D_3$ वृतम्. $T_1$ $G_2$ यथाकामं. — $^b$) $T_2$ $G_{1.5.6}$ भुंक्ष्व (for गच्छ). $Ś_1$ $K_1$ $G_6$ तं; $K_0$ $\tilde{N}_{1.2}$ $V_1$ B Da Dn $D_{1.2.4}$ वै; $M_{6-8}$ च

इक्ष्वाकूणां तु येनाहमनृणः स्यां द्विजोत्तम ।
तत्त्वत्तः प्राप्तुमिच्छामि वरं वेदविदां वर ॥ ११
अपत्यायेप्सितां मह्यं महिषीं गन्तुमर्हसि ।
शीलरूपगुणोपेतामिक्ष्वाकुकुलवृद्धये ॥ १२
गन्धर्व उवाच ।
ददानीत्येव तं तत्र राजानं प्रत्युवाच ह ।
वसिष्ठः परमेष्वासं सत्यसंधो द्विजोत्तमः ॥ १३
ततः प्रतिययौ काले वसिष्ठः सहितोऽनघ ।
ख्यातं पुरवरं लोकेष्वयोध्यां मनुजेश्वरः ॥ १४
तं प्रजाः प्रतिमोदन्त्यः सर्वाः प्रत्युद्ययुस्तदा ।
विपाप्मानं महात्मानं दिवौकस इवेश्वरम् ॥ १५
अचिरात्स मनुष्येन्द्रो नगरीं पुण्यकर्मणाम् ।
विवेश सहितस्तेन वसिष्ठेन महात्मना ॥ १६
ददृशुस्तं ततो राजन्नयोध्यावासिनो जनाः ।
पुष्येण सहितं काले दिवाकरमिवोदितम् ॥ १७
स हि तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः ।
अयोध्यां व्योम शीतांशुः शरत्काल इवोदितः ॥ १८
संसिक्तमृष्टपन्थानं पताकोच्छ्रयभूषितम् ।
मनः प्रह्लादयामास तस्य तत्पुरमुत्तमम् ॥ १९
तुष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन ।
अशोभत तदा तेन शक्रेणेवामरावती ॥ २०
ततः प्रविष्टे राजेन्द्रे तस्मिन्राजनि तां पुरीम् ।

---

(for तत्). K2-4 D5 प्रशास्तुं. — c) Ko Ñ3 V1 B Da Dn D1.2.4 °णं तु; K1-4 Ñ1.2 D5 G3 °णांस्तु; T1 G2 M5 °णांस्त्वं; G6 °णाय. — d) Ś1 K1.2.4 Ñ1 D5 कथंचन.

10 Ś1 K1 S om. उवाच. T1 G1.2 कल्मापपादः (for राजा). — a) B5 विप्र (for महान्). Ś1 K1 °मंस्यामहं प्र°; Ko.2 Ñ3 V1 Da Dn D1.4 °मंस्ये (D4 °मन्ये) महाभाग; K3.4 °मंस्ये महं प्र°; B6 °मंस्ये महाराज (m °प्राज्ञ); D6 °मन्ये महाप्र°; T1 G2 °मंस्ये महाप्र°; T2 G1.4-6 M °मंस्यामि वै प्र°. — b) K2-4 S (except G3) °ह्मणानहं. — c) B5 तद्वचः संस्थितः. Ko N V1 B D (except D5) सम्यक् (for शश्वत्). — d) Ś1 °व्यामि वै.

11 a) Ko Ñ V1 B D (except D5) च (for तु). T1 G1.2 °णां त्वयैवाहम्. — b) Ś1 तपोधन (for द्विजो°). — c) Ś1 K1-3 तं त्वत्तः; B Dn D2.4.5 T G2.3 M5 त्त्वतः; G1 तत्ततः. — d) Ñ2 V1 B Dn D1.2.5 सर्ववेद°.

12 a) Ko Ñ3 V1 B D G3 अपत्यमीप्सितं; K2.3 °प्सितं; T G1.4-6 M °प्सिता; G1 °त्यायार्पितां. S यत्त्वं (G1 मे त्वं; G3 त्वं मे) (for मह्यं). — b) Ś1 योषितं (for महिषीं). Ñ3 V1 B D (except D5) दातुमर्हसि सत्तम. — c) Ko Ñ V1 B D G3 °णोपेतम्; K1 रूपशील° (by transp.); G3 शीलवृत्त°.

13 Ś1 K1.2 om. गन्धर्व उ°; S om. उवाच. — a) K2-4 D5 M6-8 ददामीत्ये°; G3 तथास्त्वित्ये°. — b) K1 D5 T1 G1.2 प्रत्यभाषत. — d) S महातपाः.

14 a) G3 तस्मिन् (for ततः). T1 G1 तस्मिन् (for प्रति-). — b) N सह (Ś1 °हि°) तेन वै (Ś1 हि; K1-4 Ñ1 D5 ह). — cd) N ख्यातां; G3 ख्याताः. Ś1 K1.2.4 पुरि(K1 °री)वरां; Ko Ñ3 V1 B Da Dn D1.2.4 पुरीमिमां; K3 D5 पुरीं वरां; Ñ1.2 पुरवरां; T1 परवरे. Ś1 T1 G3 M5 लोके ह्य°; K4 B3.5 D4 लोके भ°. Ko-2 Ñ V1 B1.2 D (except Da) T1 G2.3 M3.4 °श्वर.

15 a) T2 G1.5.6 M transp. तं and प्रजाः. S °नंदत्यः (G3 °नंदंति). — b) Ko Ñ3 V1 B D प्रत्युद्गतास्; K1.3 प्रतिययुस्; Ñ1.2 प्रत्युदियुस्. — c) T1 G1 अपा°. — d) Ś1 K3 M6-8 °कसम्.

16 a) Ñ1 अचिरात्तु; Ñ3 V1 Dn D1 सुचिराय; B1.2.4 D2 स चिराय; B6 °राय. — b) Ko Ñ3 V1 B D (except D5) °लक्षणां. — d) Ko Ñ3 V1 B (except B5) D (except D5) महर्षिणा (for महा°).

17 a) K1.2 ते (for तं). Ko Ñ3 V1 B D महीपालम्; T1 G2.3 तदा सर्वे; G4 m महाराजम् (G4 orig. ततो राजन् as in text). — b) Ś1 K1 नराः (for जनाः). — c) Ko.3 Ñ3 V1 B D पुरोहितेन (K4 पुरोधसा च) सहितं. — d) K2.3 N1 S (except M5) निशाकरमि°.

18 a) Ko Ñ3 V1 B6 D (except D2.5) च; B1.3.5 तु (for हि). Ñ1 G3 पूज°; G2 द्योत°. — b) Ś1 लक्ष्मभृतां. — c) G1 B1.3.5 D1.3.4 सु(B1.2 D2 स्व)लक्ष्म्या राजकुंजरः. — c) G1 तामयोध्यां व्योमशीतां(!). — d) Ko Da इवोदितः.

19 a) Ś1 K1 °क्तं मृष्टमार्गं च; K4 °ष्टमार्गं च; T1 G2.3 सिक्तसंमृष्ट°. — b) Ś1 K1 °च्छ्रायभूषणं; Ko N3 V1 B D °काध्वजशोभितं; K2-4 °च्छ्रे(K3 °च्छ्र)यभूषणं; Ñ3 °काध्वजभू°; T1 G2 °कावलिभू°. — d) Ñ1 पुरी तस्य महीपतेः; M5 तत्पुरं पुरुषोत्तम.

20 a) Ñ1 T1 G1.2 M हृष्ट°. — b) Ś1 K1.2.4 T1 पुरुनंदन. — c) K1 G4 तदानेन; M6-8 तथा तेन.

21 a) Ñ1.2 V1 B1.3.6 Dn D1.4.5 राजर्षौ; B3 Da3

तस्य राज्ञोऽऽज्ञया देवी वसिष्ठमुपचक्रमे ॥ २१
ऋतावथ महर्षिः स संबभूव तया सह ।
देव्या दिव्येन विधिना वसिष्ठः श्रेष्ठभागृषिः ॥ २२
अथ तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः ।
राज्ञाभिवादितस्तेन जगाम पुनराश्रमम् ॥ २३
दीर्घकालधृतं गर्भं सुषाव न तु तं यदा ।
साथ देव्यश्मना कुक्षिं निर्बिभेद तदा स्वकम् ॥ २४

द्वादशेऽथ ततो वर्षे स जज्ञे मनुजर्षभ ।
अश्मको नाम राजर्षिः पोतनं यो न्यवेशयत् ॥ २५ C. 1. 6721 B. 1. 177. 47 K. 1. 183. 49

इति श्रीमहाभारते आदिपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

राजर्षे; S कौंतेय (T1 G2.3 राजेंद्र). — b) Ko Ñ2 V1 B D वसुपुरमुत्तमं (D1 पुरमनुत्तमं) (for राज° etc.). — c) Ko.1 Ñ V1 B D (except D5) राज्ञस्तस्याज्ञया; S तस्य राज्ञोथ सा (G3 °स्य राजाज्ञया).

22 a) K2.3 D5 च (for स). Ko Ñ2 V1 B Da Dn D1.4 महर्षिः (D4 वसिष्ठः) संविदं कृत्वा; D2 महर्षिस्तु ऋतौ तत्र. — c) G3 तपसा (for विधिना). G4 वेदेन विधिना देव्या. — d) K2 D2 श्रेष्ठवागृषिः; Dn3 G3 सत्यवागृ°; D5 G2 °वानृषिः.

23 a) Ko Ñ1.2 V1 B D ततः (for अथ). Ś1 K (except Ko) Ñ3 M6-8 तस्याः. Ś1 K1.3.4 Ñ3 समापन्ने. — c) Ñ1 राज्ञातिपूजितस्. — d) Ñ2 V1 B Dn D1.4.5 मुनिः (for पुनः).

24 a) Ko Ñ1.2 V1 B D °कालेन सा (N3 तं); K2 Ñ1 G6 °कालं धृतं; T2 °कालसृतं; G5 °काले धृतं; M6-8 °कालकृतं. Ś1 °काले धृते गर्भे. — b) K (except K1) Ñ2.3 V1 B D सुषुवे. G3 स (? read न) तु सा यथा; G4 न सुतं यदा. T1 G2 न सुषाव नृपप्रिया. — c) K2 transp. साथ and देवी; Ś1 K1.3.4 Ñ1.2 D5 G3 transp. अथ and देवी. Ko Ñ2 V1 B Da Dn D1.2.4 तदा; G1 M6-8 सा तु; M3 सा च (for साथ). Ś1 K1 आत्मना; G3 आत्मनः (for अश्मना). G2 (corrupt) सा तथेह्यशुना; M5 सा वैदेवाश्मना. — d) T1 G2 निर्दिपेष (for निर्बि°). Ko Ñ2 V1 B Da Dn D1.2.4 यशस्विनी; T1 G2.3 मनस्विनी; M3 (inf. lin. as in text).3 तदा स्वयं.

25 a) Ko.4 B6 Da G3 तु; K2 D5 च (for ऽथ). G2 M6-8 तदा (for ततो). Ñ2 V1 Da ततोपि द्वादशे वर्षे; B1 3.6 D1.2.5 ततो (D4 तदा) द्वादशमे च°; T1 G2 संपूर्णे द्वादशे व°. — b) K2-4 B1.3.5 T G (except G4) M7.8 संजज्ञे. Ko B6 Da2 D4 पुरुषर्षभे; K1 मनुजेश्वर; Ñ2 V1 Da1 Dn D1 पुरुषर्षभः; Ñ3 B1 D5 T2 G4.6 °र्षभः; G3 भरतर्षभ; M6-8 मनुजेश्वरः. — c) Ñ3 नृपतिः (for राज°); — d) Ś1 K1 पालनं; Ko.2 B5 D2 G4 पत्तनं; K3.4 पौंड्रकं; Ñ1.3 सदनं; Ñ2 V1 Da Dn D1.5 पौदन्यं; B1.3 D1 पौदनं; B5 पौदानं (m नगरं); G1.3 गोदानं; G6 पातनं; Cd पाठनं; text as in T2 M. ❀ Nil.: पौदन्यमिति तु पठितुं युक्तं । ❀ Ś1 निवेश°; M4 न्यवेद°. T1 G2 इक्ष्वाकूणां कुलोद्वहः; G3 सर्वराजर्षिसत्कृतः.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ, *followed by* वासिष्ठ; T1 संभव. Ś1 K Ñ3 B D M3.5 (all om. the sub-parvan name) mention only वासिष्ठ (M3.5 वासिष्ठोपाख्यान); *to it* Ś1 Ko.2.4 Ñ3 D3.4 *add* समाप्त. — *Adhy. name.* Ś1 K1 अश्मकोत्पत्तिः; Ko.2 D5 कल्माषपादशाप(Ko om. शाप)मोक्षः; Ñ1.2 V1 सौदाससुतोत्पत्तिः. — *Adhy. no.* (figures, words or both): Dn3 T1 176; D4 m 179; T2 G2-5 127; G1 129, G6 M 128. — *S'loka no.:* Dn 46; M5 25. — *Aggregate s'loka no.:* Dn1 6761.

## 169

1 Ś1 K1 S om. उवाच (G5 om. the ref.). D2 वैशं°. — b) K3 अदृश्यंती. — cd) Ś1 K (except Ko) B1.6 Da D1 शक्ते°, and Ś1 K B (except B6) Da D1 शक्तिजं.

2 a) Ko Dn3 °द्रिकं; K2.3 °द्रिकां. — b) Ko.2.3 क्रियां. Ñ V1 B D (except D5) M3.5 °सत्तमः. — cd) M3.5 transp. पौत्रस्य and चकार. Ñ1 T1 G2.3 मनुजव्याघ्र (for भरत°).

3 a) B6 Da Dn D4 °सुः स य°; D5 °सुः संय°; T G2.5 पराशीर्णो य°; G4.6 M °सुः प्रपतंस्ते°. Cd cites परासु°. — b) Ñ2 V1 B D मुनिः (for तदा). — c) G3 पिता; M तथा (for ततो). — d) Ś1 B1 3.5 D3.4 G3 श्रुतः.

4 a) B5 Da Dn3 D1 अमन्यत्स च ध°; T2 G2.3 मन्यतेयं महाभागं. — b) Ś1 तथा; Ñ2 V1 B Da D4 मुनिः; Dn D1.3 मुनिं. — c) Ś1 K Ñ1 D5 हि; Ñ2 V1 B5

# १६९

12 3.1 4.1 गन्धर्व उवाच ।

आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत ।
शक्तेः कुलकरं राजन्द्वितीयमिव शक्तिनम् ॥ १
जातकर्मादिकास्तस्य क्रियाः स मुनिपुंगवः ।
पौत्रस्य भरतश्रेष्ठ चकार भगवान्स्वयम् ॥ २
परासुश्च यतस्तेन वसिष्ठः स्थापितस्तदा ।
गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥ ३
अमन्यत स धर्मात्मा वसिष्ठं पितरं तदा ।
जन्मप्रभृति तस्मिंश्च पितरीव व्यवर्तत ॥ ४
स तात इति विप्रर्षिं वसिष्ठं प्रत्यभाषत ।
मातुः समक्षं कौन्तेय अदृश्यन्त्याः परंतप ॥ ५
तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः ।
अदृश्यन्त्यश्रुपूर्णाक्षी शृण्वन्ती तमुवाच ह ॥ ६
मा तात तात तातेति न ते तातो महामुनिः ।
रक्षसा भक्षितस्तात तव तातो वनान्तरे ॥ ७
मन्यसे यं तु तातेति नैष तातस्तवानघ ।
आर्यस्त्वेष पिता तस्य पितुस्तव महात्मनः ॥ ८
स एवमुक्तो दुःखार्तः सत्यवागृषिसत्तमः ।
सर्वलोकविनाशाय मतिं चक्रे महामनाः ॥ ९
तं तथा निश्चितात्मानं महात्मानं महातपाः ।
वसिष्ठो वारयामास हेतुना येन तच्छृणु ॥ १०

वसिष्ठ उवाच ।

कृतवीर्य इति ख्यातो बभूव नृपतिः क्षितौ ।
याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः ॥ ११

---

Da Dn D1 3.4 तु (for च). — d) K0 G1.2 °रीव स वर्तते; Ñ2 V1 B D G3 °रीवान्ववर्तत (B1 °रीवान्वपद्यत; D5 °रीव प्रवर्तत); T1 °रीव न्यव°; G4 °तरं स व्य°; M3 °रीवाभ्यव°.

5 a) K2 N2.3 V1 B1 Dn G1.2 इव (for इति). K0.4 Ñ2.3 V1 B3.6 Da Dn1.n2 D2 T1 G2.3 विप्रर्षिं (as in text); the rest विप्रर्षिर्. — b) B6 अभ्यभाषत; T1 प्रत्युवाच ह. — c) S (except T2 G2.3) समीपे (for समक्षं). Ś1 K D5 कौरव्य; Ñ1 विप्रर्षिर्. — d) Ś1 त्वद°; K1 त्वदृश्यंत्या; K2 Da1 G1 M °श्यंत्या; K3 अदर्श°; D5 नाद°. S (except T1 G2.3) नराधिप.

6 a) Cf. 1. 127. 3a. — b) S (except T1 G2.3) इदं (for तन्). — d) Ś1 K0.3.4 Ñ V1 B D (except Dn3 D2.5) M3.5 शृण्वती; K1 शृण्वते.

7 a) K0.3 D5 इत्येवं; K1 Ñ1.3 M3 इति न ते (for तातेति). G5 (corrupt) माता तात ततो नेति. — b) K0.2.3 नैष; K3 Ñ1.3 T1 G2.3 M3 तात (for न ते). K1 Ñ1.3 एष (for तातो). Ñ3 T2 G3 महानृषिः. Ś1 न तातोसौ महा°; K4 Ñ2 V1 B D मृतेनं पितरं पितुः. — d) T2 G3 महातपाः; T3 G4 महामुने; G1.2 M महावने; G6 महामुनिः.

8 Da om. 8ab. — a) T2 G (except G1.3) M (except M3) तातं त्वं (for तातेति). — b) Dn1 न तु; T2 G6 न चै; G4.5 नैव; M6-8 न ते (for नैष). — c) Ñ2 V1 B D (except D5) om. तु. Ñ3 तात (for तस्य). — d) Ñ1 धर्मः (for पितुः). Ñ1 T G1.3.4-6 मनस्विनः; Ñ2.3 V1 D (except D5) यशस्विनः; G3 M तपस्विनः.

9 a) K (except K1) सर्वरक्षो°. Cd cites सर्वलोका — d) Ñ3 महायशाः; Ñ3 S °तपाः.

10 S (except T2 G2.3) om. 10ab. — b) N2 V1 B Dn D1 स महात्मा (for महात्मानं). B6 महायशाः — After 10ab, K4 Ñ2 V1 B D ins.:

1787* ऋषिर्ब्रह्मविदां श्रेष्ठो मैत्रावरुणिरन्त्यधीः ।

[ K4 °रमधीः; B5.6 °रव्य°; D1 °धर्म°; D2.5 °रथ°. ]

— d) Ñ1 G4 अनेन (for येन). Ś1 K0.1.4 तं (for तत्). G3 °ना केनचिच्छृ°.

11 T2 G5.6 M5-8 om. वसिष्ठ उ°. Ś1 K1 S om. उवाच. — a) Ñ1 °वीर्येति विख्यातो. — b) Ś1 K1.3.4 Ñ1.3 T1 G2.3 नृपतिर्भुवि; Ñ2 V1 B D (except D2 पृथिवीपतिः. — c) Ś1 K1 यज्वा; B1.6 Da D2 याज्ये; T2 G1.3 मान्यो. — d) K2 B1.6 Da2 D4.5 G1.3.6 °वर्षभ; T1 G2 भरतर्षभ.

12 a) T2 G4-6 अन्वगृह्णीत्; Cd अग्रभुजः (as in text). — b) Ś1 K1 G6 सोमेन; K2 G2 M3 होमांते. — d) Ś1 K1.4 Ñ1 B6 D (except D2.4.5) पते (for पतिः).

स तानग्रभुजस्तात धान्येन च धनेन च ।
सोमान्ते तर्पयामास विपुलेन विशां पतिः ॥ १२
तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कदाचन ।
बभूव तत्कुलेयानां द्रव्यकार्यमुपस्थितम् ॥ १३
ते भृगूणां धनं ज्ञात्वा राजानः सर्व एव ह ।
याचिष्णवोऽभिजग्मुस्तांस्तात भार्गवसत्तमान् ॥ १४
भूमौ तु निदधुः केचिद्भृगवो धनमक्षयम् ।
ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम्॥१५
भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम् ।
क्षत्रियाणां तदा तात कारणान्तरदर्शनात् ॥ १६
ततो महीतलं तात क्षत्रियेण यदृच्छया ।
खनताधिगतं वित्तं केनचिद्भृगुवेश्मनि ।
तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः ॥ १७
अवमन्य ततः कोपाद्भृगूंस्तांश्शरणागतान् ।
निजघ्नुस्ते महेष्वासाः सर्वांस्तान्निशितैः शरैः ।
आ गर्भादनुकृन्तन्तश्चेरुश्चैव वसुंधराम् ॥ १८
तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा ।
भृगुपत्न्यो गिरिं तात हिमवन्तं प्रपेदिरे ॥ १९
तासामन्यतमा गर्भं भयाद्दाधार तैजसम् ।
ऊरुणैकेन वामोरुर्भर्तुः कुलविवृद्धये ।
ददृशुर्ब्राह्मणीं तां ते दीप्यमानां स्वतेजसा ॥ २०
अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह ।
मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ।
ततश्चक्षुर्वियुक्तास्ते गिरिदुर्गेषु बभ्रमुः ॥ २१ C. 1. 6816 B. 1. 178. 25 K. 1. 194. 25

---

13 a) S तस्मिंस्तु (M6-8 °श्च) नृपता°. — b) K (except K1) D5 स्वर्गते. K4 B5 च; B3 Dn3 D2 तु (for ऽथ). Ś1 K3 Ñ V1 B D (except D5) G1 कथंचन. — c) Ś1 K1 G4 °कुलीया°; T1 G3 °कुलीना°; Cd as in text. D5 बभूव तत्कुलजातानां (hypermetric!).

14 a) Ñ2 V1 B D (except D5) भृगूणां तु (for ते भृ°). — b) Ś1 K (except K1) D5 T2 G5.6 हि; Ñ3 V1 B Da Dn D1.2.4 ते (for ह). T1 G1-3 °न: संचितं बहु. — c) K1 यजिष्णवो; K3 धनार्थिनो; Cd as in text. Ś1 D1 T1 G1-2 से (for तान्). — d) K2 D5 तदा; Ñ2.3 V1 B (except B5) Dn D2.4 ततो (for तात). M5 ब्राह्मण°.

15 ab) B5 D2 भूमौ च; T1 G2 ते भूमौ. G3 निधनं (for निद°). T2 G1.4-6 M (except M5) transp. निदधुः and भृगवः. Ñ3 वदतो (for भृग°). — d) D1 क्षत्रियजं.

16 Da om. 16ab. — a) T1 G2 M6-8 च (for तु). Ś1 (sup. lin. as in text) दधुः; G1.4 ततः. — b) K0.2.4 वित्तमभीप्सि°. — d) K4 °णांतरकारणात्. Cd cites कारणांतरात्.

17 a) T2 G4.5 °तले. — d) T2 G5.6 M कश्चिच्चित् (M5 किंचित्तु) (for केनचित्). — e) K0 केचित् (for सर्वे). — f) B5 भूतले (for समे°).

18 a) S (except T1 G1) अवमत्य. Ñ2 V1 B1.3 Dn D1.2.5 T2 G4-6 M (except M5) क्रोधाद्; B5 क्रुध्या; D4 क्रुद्धा. — b) S (except T1 G2) ते (for तान्). — c) Ś1 K D5 °स्ते ततः कोपात् (K3 क्रोधात्); Ñ1.3 °स्ते महीपालाः; Ñ2 V1 B Da Dn D1.2.4 °भुः परमेष्वा°. — d) K0.3 सर्वांस्तु; K4 सर्वान्सु; T2 G4-6 M5.6-8 बहून्वै; G1 M5 भृगून्वै. — e) Ñ2.3 V1 B D °दवकृंतंतश्च. — f) G3 कुतः (for चेरुः). Ñ2 V1 B D सर्वां; G3 चेमां (for चैव).

19 a) N1 निश्छिद्य°; S (except T1 G2.3) उत्साद्य°. — c) Ñ2 V1 B D दुर्गं (for तात). — d) G3 भानुमंतं (for हिम°).

20 a) Ś1 K1 Ñ3 अन्यतरा; Dn3 D4.5 एकतमा. — b) Ś1 भयाद्दधार; K0.2 D5 भयादाधत्त; K1 Ñ3 °द्दध्रेथ; K4 °द्धेति-; Ñ1 संदधारांति-; T2 G1.4-6 M धारयामास; K3 as in text! K4 Ñ1 D5 M3.5 तेजसं; G1 M6-8 तेजसा. Ñ2 V1 B Da Dn D1.2.4 भयाद्दध्रे महौजसं; T1 G2.3 दधार सुसमाहिता. — c) Some MSS. वामोरूः (or °रु). — After 20cd, K4 Ñ2 V1 D (except Da) S ins.:

1788* तद्गर्भमुपलभ्याशु ब्राह्मणी या भयार्दिता ।
गत्वैका कथयामास क्षत्रियाणामुपह्वरे ।
ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः ।

[ (L. 1) S तं (for तद्), and अथ (for आशु). K4 सा; D3 च; D4 तु; T1 G1-3 एका; T2 G4-6 M अन्या (for या). T2 G4-6 M °र्दिताः. — (L. 2) T1 G2 संगत्य; T2 G5 गर्भं वै; G1.4.6 M6-8 गत्वा वै; G3 संगत्या; M3.5 गत्वा ताः. T2 G1.4-6 M °माशुः; G3 श्रावया°. S °णामुपांतिके. ] — e) Ñ2 V1 B3 D (except D5) सेयं (for तां ते). — f) B5 Da D2.4 Nilp दुद्रुवुस्तामनिंदितां.

21 a) B Da D2.4 ततो (for अथ). — c) T1 G2 दृष्टिः; G2.3.4 M (except M5) दृष्टिं. — d) M6-8 मध्याह्नम्. — D5 om. 21cd. — e) K3 G1 विमुक्तास्ते; Ñ2 V1 B D (D5 om.) विहीनास्ते. — T1 G2 (hapl.) om. 21f-23a.

ततस्ते मोघसंकल्पा भयार्ताः क्षत्रियर्षभाः ।
ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् ॥ २२
ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः ।
ज्योतिःप्रहीणा दुःखार्ताः शान्तार्चिष इवाग्नयः ॥२३
भगवत्याः प्रसादेन गच्छेत्क्षत्रं सचक्षुषम् ।
उपारम्य च गच्छेम सहिताः पापकर्मणः ॥ २४
सपुत्रा त्वं प्रसादं नः सर्वेषां कर्तुमर्हसि ।
पुनर्दृष्टिप्रदानेन राज्ञः संत्रातुमर्हसि ॥ २५

इति श्रीमहाभारते आदिपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

## १७०

ब्राह्मण्युवाच ।
नाहं गृह्णामि वस्तात दृष्टीर्नास्मि रुषान्विता ।
अयं तु भार्गवो नूनमूरुजः कुपितोऽद्य वः ॥ १
तेन चक्षूंषि वस्तात नूनं कोपान्महात्मना ।
स्मरता निहतान्बन्धूनादत्तानि न संशयः ॥ २
गर्भानपि यदा यूयं भृगूणां घ्नत पुत्रकाः ।
तदायमूरुणा गर्भो मया वर्षशतं धृतः ॥ ३
षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव हि ।
विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया ॥ ४
सोऽयं पितृवधान्नूनं क्रोधाद्वो हन्तुमिच्छति ।

22 T1 G2 om. 22 (cf. v. l. 21). — a) Ś1 मेघसंकाशा; K1 मेघ°; Ñ1 मोह°; Ñ2 V1 B D मोहमापन्ना. — b) Ñ1.3 S (T1 G2 om.) °ताः क्षत्रियाः पुनः; Ñ2 V1 B D राजानो नष्टदृष्टयः (D1 °बुद्धयः).

23 T1 G2 om. 23a (cf. v. l. 21). — a) K1 Da M6-8 °भागाः. — b) T1 G2 °याश्च. — c) Ś1 K1 G3 °प्रहीना; T1 G2 M6-8 °णान्; G4 °विहीना. — d) Ñ3 गतार्चिषः.

24 Before 24, B6 ins. क्षत्रिया ऊ°. — b) S (except G3) निरामयं. — c) Ñ1 B5 G3 उपराम्य; B1.6 Da D2.4 उपर°. K2 वेगेन (for गच्छेम). D1 स उपारम्य ग°; S (except T1 G2.3) पापादस्मादुपारम्य (M6-8 °पाक्रम्य). — d) K0 N V1 B6 Dn D4 °कर्मिणः; K1 °कर्मणि. S (except T1 G2.3) पश्येम च यथापुरं (G3 तथा पुनः).

25 a) G3.4 सुपुत्रा. B1.3 D2 transp. त्वं and नः. — b) Ñ2 V1 B D (except D5) कर्तुमर्हसि शोभने. — T2 G5 om. 25cd. — c) Ś1 K1 Dn1.n2 T1 M3.5 °प्रसादेन. — d) Ś1 K1 राज्ञः संप्रासु°; K2 °ज्ञस्त्वं त्रा°; K3 G1.6 M क्षत्रियांस्त्रातु°; Ñ1 प्रसीद शरणा भव; B (except B6) राज्ञस्त्रातुमिहार्हसि.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan.* Ñ1.2 V1 चैत्ररथ, followed by और्वोपाख्यान; T1 संभव. Ś1 K Ñ3 B Da Dn1.n2 D1.3.4.5 M3.5 (all om. the sub-parvan name) mention only और्व (B5 वासिष्ठे और्वं; M3.5 वासिष्ठोपाख्यान; D5 calls it parvan). — *Adhy. name:* K3 और्वोत्पत्तिः; D5 और्वः; G3 और्वोपाख्यानं; M3.5 और्वोत्पत्तिकथनं. — *Adhy. no.* (figures, words or both): Dn3 T1 177; D4m 180; T2 G2-5 128; G1 130; G6 M 129. — *S'loka no.* Dn 28; M3 29. — *Aggregate s'loka no.:* Dn3 6789

## 170

1 K1.3 S om. उवाच. — a) Ś1 नानुगृह्णा°; T2 G1 M नाहं मुष्णामि. K0.3.4 D5 वस्तावद्; Ñ V1 B Da Dn1.n2 D1.4 वस्ताता; T1 G2 वो भूपा; G3 राजेंद्. — b) B5 G1-4 M3 दृष्टिं. — c) K0.3.4 D5 पुत्रो मे (for अयं तु) T2 G5 M नाम; G3 रामः (for नूनम्). — d) T1 G2.3 M भृशं; T2 G1.4-6 M3.6-8 ध्रुवं (for ऽद्य वः).

2 a) K (except K0) D5 तावत्; Ñ V1 B Dn3 n D1.4 ताता; T2 G2 नूनं (for तात). — b) Ñ3 V1 B D (except D5) G3 व्यक्तं को°; T G1.2.4-6 M कुपितेन — d) T2 corrupt. T1 G1.3.4.5 M आर्तानिह (M नाशितानि); G3 आहृतानि. B1.3.5 Da (Da1m Arjp as in text) D2.4 नराधिपाः; S (except G3) कथंचन.

4 a) G4 षडंगं. Ś1 K1 D2 T1 G2.3 चाखिला वेदाः; K2.4 Ñ1.3 V1 B5 G4 °लं वेदं. — b) T2 G5 M6-8 °स्थ. T1 G2 D (except D1.3) ह; Ñ1 S च (for हि). — c) Ñ1 ततः; B1 नृपाः (for भूयः). विविशुर्. — d) Ñ2 V1 B D (except D5) व्यक्तं (for नू°

5 a) Ñ2 V1 B D (except D5) व्यक्तं (for नू°

तेजसा यस्य दिव्येन चक्षूंषि मुषितानि वः ॥ ५
तमिमं तात याचध्वमौर्वं मम सुतोत्तमम् ।
अयं वः प्रणिपातेन तुष्टो दृष्टीर्विमोक्ष्यति ॥ ६

गन्धर्व उवाच ।

एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम् ।
ऊचुः प्रसीदेति तदा प्रसादं च चकार सः ॥ ७
अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः ।
स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत ॥ ८
चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः ।
भार्गवस्तु मुनिर्मेने सर्वलोकपराभवम् ॥ ९
स चक्रे तात लोकानां विनाशाय महामनाः ।
सर्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः ॥ १०
इच्छन्नपचितिं कर्तुं भृगूणां भृगुसत्तमः ।
सर्वलोकविनाशाय तपसा महतैधितः ॥ ११
तापयामास लोकान्स सदेवासुरमानुषान् ।
तपसोग्रेण महता नन्दयिष्यन्पितामहान् ॥ १२
ततस्तं पितरस्तात विज्ञाय भृगुसत्तमम् ।
पितृलोकादुपागम्य सर्वं ऊचुरिदं वचः ॥ १३
और्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक ।
प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः ॥ १४
नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः ।
वधोऽभ्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् ॥ १५
आयुषा हि प्रकृष्टेन यदा नः खेद आविशत् ।
तदास्माभिर्वधस्तात क्षत्रियैरीप्सितः स्वयम् ॥ १६
निखातं तद्धि वै वित्तं केनचिद्भृगुवेश्मनि ।
वैरायैव तदा न्यस्तं क्षत्रियान्कोपयिष्णुभिः । C. 1. 6636 B. 1. 179. 17 K. 1. 193. 17

— c) Ñ1.2 V1 B D (except D5) तस्य. T1 G4–6 दीप्ते° (for दिव्ये°). — d) K2.4 T1 G2 च (for वः).

6 a) T1 G2.3 एव (for इमं). B1 (m as in text) G5 ताता; T1 G2.3 यूयं; Cd as in text. ❀ Dev.: तातेति जात्यपेक्षया। याचध्वमिति व्यक्त्यपेक्षया। ❀ — b) B5 सुतो ह्ययं. — d) S transp. तुष्टः and दृष्टीः. Ñ2 V1 B6 D (except D2.5) प्रमोक्ष्यति; S प्रदास्यति.

7 M3 om. गन्धर्व उ°; Ś1 K1 T2 G1.4–6 M6–8 om. उवाच. K0.3 Ñ2 V1 B3.6 D वसिष्ठ उ°; T1 G2.3 M5 वसिष्ठः (for गन्धर्व उ°). — b) Da °नस्तातमूरु°. — c) K0 मुदा (for तदा). — d) K0 T1 G2 ह (for सः).

8 a) T1 G2.3 transp. एव and च. Ś1 K (except K3) D5 मुहूर्तेन (for च विख्या°). — b) Ś1 K1 M5 सत्तम; K4 T1 G2.3 विश्रुतः. — c) T2 G1.4–6 M6–8 विख्यातः; G2 विप्रर्षे. — d) S विनिःसृतः (for व्यजा°).

9 a) Ñ V1 B D (except D2) प्रतिलब्ध्वा च (D5 °य). — b) T1 G2.3 °रमुनेराधिपाः. — c) Ś1 K0 D5 अथ; K1–4 अपि (for तु). Ś1 K D5 त्वौर्वः (K2 चैव) (for मेने). — d) Ś1 K D5 सर्वलोकेषु सत्तमः.

10 a) K3 तपश्चक्रे स लो°. — b) K1.2 महात्मना; Ñ1 महायशः; D4.8 मतिं तदा; T1 G2.3 महायशाः; T2 G1.4–6 मुनिस्तदा; M पुनस्तदा (M5 मनस्तदा).

11 a) G2 गंतुं. — b) K0 स द्विजोत्तमः; Ñ2 V1 Dn D1.5 भृगुनंदनः. — c) K2 (corrupt) °तैधिकः; K4 महतोद्धृतः; B1.2.5 Da (Da1m as in text) D2.4 महताधिकः. S तेपे तूग्रं (G1.2 -स्त्युग्रं; M7 -रुग्रं) परंतपः (G3 महता तपसान्वितः; M8.5 तेपे तूग्रतरं तपः).

12 a) K3 D2m त्रीन् लोकान्; K4 T1 G2.3 लोकांस्त्रीन्; Ñ3 V1 B6 Da Dn D1 T2 G1.4–6 M6–8 तान् लोकान्; M3.4 वै लोकान् (for लोकान्स). — b) K3 °मानवान्; Ñ3 °पन्नगान्; T2 G1.4–6 स(G1 अ)सुरासुर°; M ससुरासुर-मानवान्. — c) Ś1 K1 मनसा (for महता).

13 a) Ś1 K Ñ1.3 D3.4 ते; T1 G2.3 तत् (for तं). K2 भृगवस्तात. — b) Ś1 गुरुसत्तमान्; Ñ2 V1 B3 Dn1.n3 D1.5 कुलनंदनं; B1.4.5 Da Dn3 D2.4 T2 G3–6 भृगुनंदनं. — c) K0.4 D5 °कात्समागत्य; Ñ1 G3 M5 °कादिहागम°; T2 G1 °कादिहागत्य. — d) Ś1 K1 सर्वेप्यूचु°; T1 G2 और्वमूचु°.

14 Before 14, Ś1 Ñ3 V1 B3.6 D ins. पितर ऊचुः; S (except G3 M3.5) पितरः. — b) K3 Da °स्तोऽयस्य. — c) M3 पितृलोकानां.

15 a) G1.3 M3 तादृशैर्; G4 भनीशैर्. T1 G2 स्वादृशैरपि संक्रुद्धैः. — G3 om. 15cd. — c) Ñ1 S (except M3; G3 om.) -भ्युपेक्षि°; Ñ3 V1 B D ह्युपेक्षि°. Ñ1 T2 G1.4–6 M3–8 पूर्वं (for सर्वैः). — d) T1 °णां महात्मभिः.

16 a) K0.3.4 हि प्रभूतेन; Ñ2.3 (sup. lin. sec. m. as in text) B D वि(Da -ति)प्र°. T2 G4–6 च प्र°; G3 नः प्र°. Cd cites प्रकृष्टतमेन. — c) T1 G2 सदास्माकं; G1 तथास्मा°; G3 तयास्माकं.

17 a) G1 निहितं. K0 B6 Da D1 तद्धि धैर्; K3 त्वद्धि धैर्; K4 B1.2.3 Da D1.3 यच्च वै; Ñ2 तंत्र वै; D2

किं हि वित्तेन नः कार्यं स्वर्गेप्सूनां द्विजर्षभ ॥ १७
यदा तु मृत्युरादातुं न नः शक्नोति सर्वशः ।
तदास्माभिरयं दृष्ट उपायस्तात संमतः ॥ १८
आत्महा च पुमांस्तात न लोकाँल्लभते शुभान् ।
ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा विनाशितः ॥ १९
न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि ।
नियच्छेदं मनः पापात्सर्वलोकपराभवात् ॥ २०
न हि नः क्षत्रियाः केचिन्न लोकाः सप्त पुत्रक ।
दूषयन्ति तपस्तेजः क्रोधमुत्पतितं जहि ॥ २१

इति श्रीमहाभारते आदिपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

## १७१

औौर्व उवाच ।
उक्तवानस्मि यां क्रोधात्प्रतिज्ञां पितरस्तदा ।
सर्वलोकविनाशाय न सा मे वितथा भवेत् ॥ १
वृथारोषप्रतिज्ञो हि नाहं जीवितुमुत्सहे ।
अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिम् ॥ २
यो हि कारणतः क्रोधं संजातं क्षन्तुमर्हति ।
नालं स मनुजः सम्यक्त्रिवर्गं परिरक्षितुम् ॥ ३
अशिष्टानां नियन्ता हि शिष्टानां परिरक्षिता ।

तद्वित्तैर्. T1 G2 दृष्टिर्निखनता वित्तं. — b) Ś1 K B6 Da D1.5 भृगुभिर्भुवि (D1 °भिः पुत्र-) वेश्मनि. — c) S (except T1 G2.3) ततो (for तदा). — d) T1 क्रोधयिष्णुना; T2 G4-6 क्रोधयि°; G2 °ष्णुना. — f) T1 G2 मोक्षेप्सूनां. Ñ2 V1 B D (except D5) T1 G2.3 द्विजोत्तम. — After 17, N T1 G1-3 ins.:

1789* यदस्माकं धनाध्यक्षः प्रभूतं धनमाहरत्।

[ Ś1 K Ñ1.2 D5 T1 G1-3 °क्षः स्वयं वित्तमुपाहरत्. Cd cites धनाध्यक्षः. ]

18 a) K1 M च (for तु). — b) Ś1 न च; K0.3.4 मास्मान्. S (except M3.5) न शक्नोति च सर्व°. — c) G1 तदास्मान्धारयन्. G3 M7.8 दृष्ट्वा. — d) T1 G1-3 सर्वशः; T2 G4-6 धर्मतः (for संम°).

19 a) T2 G5 आत्मा च. D2 यः; T2 G5 नः (for च). Ś1 K D2.5 नरः; T2 G4.6 M पुनः (for पुमान्). Ñ3 लोके (for तात). — b) M3 लोकानामुते. — c) T1 G1.2 तदास्मा°. Ś1 K B6 Da D5 G3 °क्ष्यैतत्. — d) Ś1 K0.1 Ñ V1 B6 Dn D1.3 M3 नात्म° (as in text); the rest आत्म° (om. न). Ñ1 विपादितः; Ñ2.3 V1 B D (except D5) निपातितः. — After 19, T2 G5 ins.:

1790* एतस्य परिहारार्थं त्वं तु धर्मं समाचर।

20 a) G3 मूत; G4 तावत् (for तात). — b) Ś1 N1 Da G1 °तुमर्हसि. — cd) G3 °दं मनसापात्सर्वलोकभयावहात्.

21 a) N2 V1 Dn D1.4 मा यधीः; Da न हि यः; G1 न पुनः. K4 Ñ2 V1 B6 Dn क्षत्रियान्. K4 Ñ2 V1 B D तात; T2 G4.6 संति (for केचित्). — b) Ñ V1 B6 Dn D1.3 लोकान्. B1.3.6 तव; Da D2.4 ते च (for सप्त). — c) K0 D5 पूजयंति; K4 Ñ3 V1 B6 Dn D1 दूषयंतं; नाशयंति. Ñ1 हतं; Ñ3 हतः; B3.6 Da D2.4 G3 ततः; यतः; T2 G1.2.4-6 M6-8 पुनः; M3.5 च नः (for तप°). Ś1 K1 तेजाः; T1 G3 तेयं; M3.5 तस्माद् (for -तेज°). — d) G3 क्रोध उत्पतितो महान्. — Nil. ends the ad° with the remark पाठांतरमुपेक्ष्यं, but does not ment° what variant he means.

Colophon. *Major parvan:* T2 G M संभव° (° आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ; T1 संभ° Ś1 K Ñ3 B Da Dn3 D2.4 M3.5 (all om. the su° parvan name) mention only और्व (M3.5 और्वोपाख्यान°). — *Adhy. name:* K0.4 भृगूणां वाक्यं; D1 और्वोत्पत्तिः; और्वं प्रति भृगूणां वाक्यं. — *Adhy. no.* (figures, wor° or both): Dn3 T1 178; D4m 181; T2 G3-5 12° G1 131; G2 M 130. — *S'loka no.:* Dn M3 ° — *Aggregate s'loka no.:* Dn3 6811.

### 171

1 K1 S om. उवाच. — a) T2 G1-3 हृतवान्. Dn D2 यत् (for यां). — b) G1 अपरः (for पितरः). T G (except G3) तथा. — d) Ñ3 न मे सा; G3 तथापि°

2 a) Ñ2 V1 B D (except D5) वै; S [ऽ]हं (for हि°). — b) S तु (M6-8 हि) (for अहं). Ñ V1 B D (excep° D5) T2 G3-6 अवितुम्. — c) G2.3 अतिस्तीर्णो. K0.4 S (except G3 M3) मे (for मां). K3.4 G1-6 रोषा° — d) K4 दहाद्. Ś1 K Ñ1 गर्भं (for अग्नि°). T1 ° दुर्धनं; M °रणीं.

स्थाने रोषः प्रयुक्तः स्यान्नृपैः स्वर्गजिगीषुभिः ॥ ४
अथौपमहमूरुस्थो गर्भशय्यागतस्तदा ।
आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्वधे ॥ ५
सामरैर्हि यदा लोकैर्भृगूणां क्षत्रियाधमैः ।
आगर्भोत्सादनं क्षान्तं तदा मां मन्युराविशत् ॥ ६
आपूर्णकोशाः किल मे मातरः पितरस्तथा ।
भयात्सर्वेषु लोकेषु नाधिजग्मुः परायणम् ॥ ७
तान्भृगूणां तदा दारान्कश्चिन्नाभ्यवपद्यत ।
यदा तदा दधारेयमूरुणैकेन मां शुभा ॥ ८
प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते ।
तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ॥ ९
यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् ।
तिष्ठन्ति बहवो लोके तदा पापेषु कर्मसु ॥ १०
जानन्नपि च यः पापं शक्तिमान्न नियच्छति ।
ईशः सन्सोऽपि तेनैव कर्मणा संप्रयुज्यते ॥ ११
राजभिश्चेश्वरैश्चैव यदि वै पितरो मम ।
शक्तैर्न शकिता त्रातुमिष्टं मत्वेह जीवितम् ॥ १२
अत एषामहं क्रुद्धो लोकानामीश्वरोऽद्य सन् ।
भवतां तु वचो नाहमलं समतिवर्तितुम् ॥ १३
मम चापि भवेदेतदीश्वरस्य सतो महत् ।
उपेक्षमाणस्य पुनर्लोकानां किल्बिषाद्भयम् ॥ १४
यश्चायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति । C. 1. 685* B. 1. 180. 15 K. 1. 190. 15

3 $^a$) G$_3$ देशे काले तु यः; G$_{4.5}$ यो ह्यका°. Ś$_1$ K Ñ$_3$ D$_5$ कोपं; G$_1$ क्रोधात्. G$_6$ देशकालेन संजातं. — $^b$) G$_6$ क्रोधं यः (for संजातं). Ś$_1$ K$_1$ हंतुम्; D$_2$ यंतुम्; G$_{1.3}$ हर्तुम्. K$_4$ D$_2$ इच्छसि; B$_{1.5}$ M$_3$ इच्छति. — $^d$) T$_2$ G (except G$_{3.5}$) अभि° (for परि°).

4 G$_6$ om. 4$^{ab}$. — $^a$) Ś$_1$ K$_{0.2-4}$ N V$_1$ B$_6$ D$_n$ D$_{1.5}$ T$_2$ G$_{1.3}$ M$_{6-8}$ नियंता (as in text); G$_3$ नियुक्ता; the rest निहंता. T$_2$ G$_5$ तु; G$_1$ [ऽ]स्ति (for हि). — $^c$) D$_2$ अलोलुपः (for स्थाने रोषः). — $^d$) D$_2$ T$_1$ G$_{2.4}$ नरैः; G$_3$ सृष्टैः; G$_5$ स्थाने (for नृपैः). K$_{3.4}$ Ñ$_2$ V$_1$ B D (except D$_4$) G$_4$ स्वर्ग°; G$_5$ M स्वर्गं (for स्वर्ग°).

5 $^b$) Ś$_1$ K$_1$ G$_4$ °शय्यां ग°. — $^c$) Ś$_1$ K$_1$ आधानं (for °रावं). T$_2$ G$_{1.5.6}$ M °वं तु भृशं तत्र.

6 $^a$) Ś$_1$ K Ñ$_2$ V$_1$ B$_3$ m.$_{5.6}$ D संहारो; G$_1$ पामरैर्; G$_2$ समर्दैर्; G$_{4.5}$ सामरे (sic). Ś$_1$ अहं; K$_1$ अथ; D$_5$ अयं; G$_{1.3}$ अस्मिन् (for हि). T G$_6$ समाहितैस्तदा. Ś$_1$ K$_{2.3.4}$ Ñ$_{1.2}$ V$_1$ B$_3$ D T G (except G$_3$) लोके; B$_3$ लोभैर्. — $^c$) Ś$_1$ K Ñ$_{1.3}$ B$_{5.6}$ D$_a$ D$_{2.4}$ °त्सादनात्; N$_2$ V$_1$ B$_{1.3}$ D$_n$ D$_{1.5}$ °च्छेदनात्. N$_{2.3}$ V$_1$ D$_n$ D$_{1.4}$ क्रांतः; D$_2$ वृत्तं. Arjp आगर्भोत्सादनाक्रांतः. — $^d$) Ś$_1$ मे; some MSS. मा.

7 $^a$) Ñ V$_1$ B D (except D$_5$) संपूर्ण°; S प्रकीर्ण(M$_3$ निकीर्ण; M$_6$ विशीर्ण)केशाः; Nīlp संपूर्णशोकाः. Ñ$_3$ B D$_a$ D$_{3.4.5}$ इव (for किल). — $^c$) G$_1$ काले° (for लोके°). — M$_7$ (hapl.) om. 7$^d$–9$^c$.

8 M$_7$ om. 8 (cf. v. l. 7). — $^a$) K$_3$ transp. तान् and भृगूणां. Ñ$_{2.3}$ V$_1$ B D (except D$_5$) यदा; T$_2$ G$_{4-6}$ परान्. G$_3$ राजन्; M$_{6-8}$ राज्ञां (for दारान्). M$_{2.6}$ तान्भृगूक्षिप्रतो राज्ञो (M$_6$ °प्तो राज्ञः). — $^b$) K$_0$ कश्चिन्नाभ्यपद्यते; Ñ$_{2.3}$ V$_1$ D$_n$ D$_{1.5}$ G$_3$ °न्नाभ्युपपद्य°; B D$_a$ D$_{1.2}$ G$_1$ °न्नाभ्युपपद्यते; T$_2$ G$_{2.5}$ °पद्यते; M$_6$ कश्चिदन्योऽभिपद्यते. — $^{cd}$) K$_3$ Ñ$_2$ V$_1$ B D माता (for यदा). T$_1$ G$_{2.3}$ तदा दधार मां माता सोरुणैकेन भामिनी.

9 M$_7$ om 9$^{abc}$ (cf. v. l. 7). — $^b$) Ñ$_1$ कर्मसु; S लोके न. — K$_3$ (hapl.) om. 9$^{cd}$. — $^c$) Ś$_1$ तदा च सर्वलोकेषु. — $^d$) S °न्नोप(G$_3$ °न्नैव; M$_{6-8}$ °न्नाव)शाम्यति.

10 $^b$) G$_{1.3.4}$ पापान्. M$_{6-8}$ ना· (for न). — $^c$) Ñ$_2$ V$_1$ लोकाः.

11 $^a$) K$_3$ यदा; T$_2$ G$_{2.3}$ हि यः. — $^c$) B$_{1.3}$(m as in text).$_5$ D$_2$ नृशंसः सोऽपि; S (except T$_1$ G$_{2.3}$) ईशः स चापि.

12 $^a$) K$_0$ D$_5$ S (except G$_3$) °श्चेतरै°. — $^b$) K$_{0.2}$ T$_2$ G M$_3$ यदा (G$_3$ यथा) (for यदि). — $^c$) K$_{0.2.4}$ D$_5$ T$_2$ G$_{1.5.6}$ M$_3$ यतितास्; M$_{6-8}$ यतितस्. T$_1$ G$_{2.3}$ न लोकैरीप्सितात्त्रा°; G$_4$ शक्तैर्निवारितैस्त्रा°. — $^d$) Ś$_1$ K$_1$ D$_5$ °ष्टं संदेहजी°; T$_1$ G$_{2.3}$ शक्तैः संतोखिलैरपि.

13 $^a$) Ś$_1$ K$_1$ एवम् (for एषाम्). — $^b$) Ś$_1$ K$_1$ G$_4$ -द्य सः; K$_4$ T$_1$ G$_2$ -पि सन्; Ñ$_1$ -पि न; Ñ$_3$ V$_1$ B D G$_3$ ह्यहं. — $^{cd}$) K$_0$ Ñ V$_1$ B D T$_2$ G$_{2.3}$ च (for तु). K$_3$ Ñ V$_1$ B D transp. अहं and अलं. Ñ V$_1$ B$_1$ m.$_6$ D (except D$_{4.5}$) M$_{6-8}$ Cd समभि°; G$_4$ प्रतिनि°. K$_3$ °चो नाहमभिवर्तितुमुत्सहे. — After 13, M$_{6-8}$ read 15$^{ab}$.

14 $^a$) K$_{0.3.4}$ एन.; T$_1$ G$_{2.3}$ दोषः (for एतद्). Ñ$_2$ V$_1$ B$_3$ D$_n$ D$_2$ ममापि चेन्नवेदेवं; B$_{1.5.6}$ D$_a$ D$_{1.4.5}$ ममापि च भवेदेवं (D$_{1.5}$ °देतद्). — $^b$) G$_{4.5}$ सतो. T$_1$ G$_{2.3}$ महान्; G$_4$ [ऽ]भवत्. — $^c$) A few MSS. उपेक्ष्य°. — $^d$) T$_1$ G$_{2.3}$ M$_{6.7}$ °पं महत्; G$_{4.6}$ °पं भयं; M$_{6.8}$

दहेदेष च मामेव निगृहीतः स्वतेजसा ॥ १५
भवतां च विजानामि सर्वलोकहितेप्सुताम् ।
तस्माद्विदध्वं यच्छ्रेयो लोकानां मम चेश्वराः ॥ १६

पितर ऊचुः ।

य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति ।
अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः ॥ १७
आपोमयाः सर्वरसाः सर्वमापोमयं जगत् ।
तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम ॥ १८
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ ।
मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः ॥१९
एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति ।
न चैव सामरा लोका गमिष्यन्ति पराभवम् ॥ २

वसिष्ठ उवाच ।

ततस्तं क्रोधजं तात और्वोऽग्निं वरुणालये ।
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥ २१
महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः ।
तमग्निमुद्गिरन्वक्त्रात्पिबत्यापो महोदधौ ॥ २२
तस्मात्त्वमपि भद्रं ते न लोकान्हन्तुमर्हसि ।
पराशर परान्धर्माञ्ज्ञानञ्ज्ञानवतां वर ॥ २३

इति श्रीमहाभारते आदिपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

°पं मतं.

15 M6–8 read 15ab after 13. — a) M6–8 य एष. Ko ऊरुजो; G6 मन्युना. T2 G1.4–6 M3.5 हि; M6–8 ते (for मे). T1 G2.3 °यं मन्युजातोऽग्निः. — G3 (hapl.) om. 15b–17a. — b) = 17b. Ś1 K2 G2.4–6 M6–8 लोकानां दा°. — K3 (hapl.) om. 15c–17b. — c) T2 G1.4–6 transp. एष and एव. G4 स (for च). T1 G3 प्रदहेदेष मामेव.

16 K3 G3 om. 16 (cf. v. l. 15). — a) Ñ1 चापि जानामि; B6 चैव जा°; M6–8 च विजानाति. — b) D5 G1 M5 °हितेप्सितां. — cd) Ko.3 T1 G2 वदध्वं; K4 दद°; B Da1 D1.5 विध°; G1.4.6 M हि धर्म्यं. T1 G2 transp. यच्छ्रे° and लोका°. G4 transp. मम and च. T2 G1.4.6 चेप्सया.

17 K3 om. 17ab; G3 om. 17a (cf. v. l. 15). — K1 S (but not Ś1 l) om. ऊचुः (G3 M3 om. the ref.); K3 ins. the ref. marg. sec. m. — After पितर ऊ°, K4 ins.:

1791* कुरु तात वचोऽस्माकं मा लोकान्हिंसि चाधुना ।

— a) T2 G3 एव (for एष). Ñ3 तेजो (for तेऽग्निर्). M6–8 यश्चायं मन्युजोऽप्यग्निर्. — b) = 15b. Ś1 T2 G2.3 लोकानां दा°. — c) Ś1 अप्सु; K4 ह्याशु.

18 T2 G1.3.6 M om. 18ab. — a) D1 आपोमयाद्; T1 G3–6 अम्मया हि. Ś1 K2 ह्यप्सुरसाः; Ko.2.4 T1 G2.3 रसाः सर्वे. — b) T1 G2.4 सर्वमेवाम्मयं ज°. — c) Ñ1 G1 M प्रमुञ्चेमं. — d) T1 G2.3 भृगुनंदन (for द्विज°).

19 a) Ś1 K Ñ3 Da तात (for विप्र). — b) Ś1 K1 G3 M6–8 यथेच्छ°; Da1 T2 G4.6 यदिच्छ°. — c) Ś1 K1 दहेत्. D4 अंभो; G6 लोकान् (for आपो). — d) Ś1 K1 G3 ह्लोतम्मयाः; K3 ह्लोतेप्समयाः; T G1.2.4–6 M चैवाम्मयाः. G3 लोकाश्चैव त्वया स्थिताः.

20 a) M6–8 लोके (for एवं). D4 सत्यैव. — b) T1 G2.6 transp. तवा° and भवि°. Ś1 तव चैव; K4 भवानघ; T2 G4.5 तवाद्य च. — c) N (except Ś1 K4) चैवं. — d) G3 त्वया यायात्परा°.

21 Ś1 K1 S om. उवाच. — a) Ś1 K1 D1 औवाग्निं; K2.4 G2 ऊर्वा°. — c) B6 सदैवापः; D6 स वै चापः.

22 a) Ś1 K D6 महाद्धयशिरो. — b) K4 ति वाडवोनिलः; see below. — c) K2 तदग्निम्; M सदाग्निम्. Ś1 K1.2 Ñ V1 B3 Dn D1.4 उद्गिरद्; D उद्गमन्. K4 विनाशहेतुर्जगतां. — d) K2 °स्याप उदन्वां K4 यत्तद्वेदविदो विदुः (=22b).

23 b) Da दग्धुम् (for हन्तुम्). — c) S परं ( वरं). Ñ V1 B D लोकान्; S धर्मं. — d) S ज्ञात्वा ( G2.3 ज्ञानं). T1 G1 धर्मभृतां; T1 G1.4–6 M6–8 ज्ञानवि M3 (inf. lin. as in text) वेदविदां.

Colophon om. in B1. — Major parvan: T2 G संभव° (for आदि°). — Sub-parvan: Ñ1.3 V1 चैत्र followed by और्वोपाख्यान. Ś1 Ko–3 N3 D4.6 Dn1.n3 D4.5 T G1.4 M3.5 (all om. the sub-parv name) mention only और्व (T2 वासिष्ठोपाख्यान; T2 G Ms.5 और्वोपाख्यान). — Adhy. name: Ko.4 वा( व)ड्वोत्पत्तिः; K3 वडवामुखोत्पत्तिः; G3 वडवाग्निसंभव — Adhy. no. (figures, words or both): Dn3 T2 17 D4n 182; D5 78 (1 for 178); T2 G3–6 1 G1 132; G2.6 M 131. — Śloka no.: Dn M3 2 — Aggregate śloka no.: Dn3 6834.

# १७२

गन्धर्व उवाच ।
एवमुक्तः स विप्रर्षिर्वसिष्ठेन महात्मना ।
न्ययच्छदात्मनः कोपं सर्वलोकपराभवात् ॥ १
ईजे च स महातेजाः सर्ववेदविदां वरः ।
ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः ॥ २
ततो वृद्धांश्च बालांश्च राक्षसान्स महामुनिः ।
ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन् ॥ ३
न हि तं वारयामास वसिष्ठो रक्षसां वधात् ।
द्वितीयामस्य मा भाङ्क्षं प्रतिज्ञामिति निश्चयात् ॥ ४
त्रयाणां पावकानां स सत्रे तस्मिन्महामुनिः ।
आसीत्पुरस्ताद्दीप्तानां चतुर्थ इव पावकः ॥ ५
तेन यज्ञेन शुभ्रेण हूयमानेन युक्तितः ।
तद्विदीपितमाकाशं सूर्येणेव घनात्यये ॥ ६
तं वसिष्ठादयः सर्वे मुनयस्तत्र मेनिरे ।
तेजसा दिवि दीप्यन्तं द्वितीयमिव भास्करम् ॥ ७
ततः परमदुष्प्रापमन्यैरृषिरुदारधीः ।
समापिपयिषुः सत्रं तमत्रिः समुपागमत् ॥ ८
तथा पुलस्त्यः पुलहः क्रतुश्चैव महाक्रतुम् ।
उपाजग्मुरमित्रघ्न रक्षसां जीवितेप्सया ॥ ९
पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ ।
उवाचेदं वचः पार्थ पराशरमरिंदमम् ॥ १०
कच्चित्तातापविघ्नं ते कच्चिन्नन्दसि पुत्रक । C 1. 6575 B. 1. 181. 11 K. 1. 197. 11

## 172

1 Ś1 K3 S om. उवाच. — ᵇ) A few MSS. वशिष्ठेन. — ᶜ) K2.3 T2 G (except G3.4) नियच्छद्; Ñ1 व्याय°; Ñ3 न्याय°. Ñ V1 B D T G (except G1.3) M3 क्रोधं (for कोपं). — ᵈ) T1 G1-3 °भयावहं.

2 ᵇ) T1 G2 ततो (for सर्व-). Ñ1.2 सर्वधर्मविदां (Ñ3 °भृतां). — ᶜ) K0.3 G3.6 M6.8 ऋषिराक्षस°; K1 ऋषे राक्षसमंत्रेण. — ᵈ) Ś1 K1.2.4 B1.3 Da Dn1 D1 शाक्तेयो; G3 शाक्तो यो. A few MSS. परासरः.

3 ᵃ) K4 M6-8 बालांश्च वृद्धांश्च (by transp.). — ᵇ) K0 G1 महाद्युतिः; K3.4 T2 G4-6 °मतिः. — D2 (hapl.) om. 3ᶜ-5ᵇ. — ᶜ) S (except T1 G2.3 M3) सत्रे (for यज्ञे). — ᵈ) Ś1 K B1.3 Da शक्तेर्.

4 D2 om. 4 (cf. v. l. 3). — ᵇ) K1 Ñ1 वधं (for वधात्). — ᶜ) Ś1 K1 मा भंगं; T1 G2-4 मा हिंस्रां (T1 °सां; G2 °स्यात्); T2 G1.5 M मा जग्ने; G6 मा हन्यां; Cd as in text. — ᵈ) Ñ1 S इति (G1 अनु-) चिंतयन्.

5 D2 om. 5ᵃᵇ (cf. v. l. 3). — ᵃ) K0.1 Ñ2 V1 Dn D1 T1 G2.3 च (for स). — ᵇ) G1 महाद्युतिः. — ᶜ) G6 पुरस्ताद्देयानां.

6 ᵃ) T2 G4-6 M शुद्धेन; G1 चैतेन. — ᵇ) K1 हूयमाने च. Ś1 भक्तितः; K4 Ñ1.2 B1.3.6 Dn1.n3 शक्तितः; B3 Dn2 G3 शक्तिजः; Da शक्तिभिः; D5 युक्तिजः; G1 शक्तिना. — ᶜ) Ś1 उद्दीपितमिवाकाशं; K1 तदा दीपित°; K3 Dn2 G1 तद्वद्दीपित°; D2 तदुद्दीपित°. — ᵈ) K3 T2 G (except G1) M6-8 सूर्येणैव.

7 K1 om. 7ᵃᵇ. — ᵃ) A few MSS. वशिष्ठा°. — ᶜ) K4 Ñ2 V1 B D (except D5) S (except T1 G2.3) तेजसा दीप्यमानं वै (T2 G1.4-6 M तु); Ñ1 °भिविदीर्यंतं; N3 °तीव दीप्यंतं.

8 ᵃ) Da G3 परमदुष्पारं; cf. v. l. 1. 53. 29ᵃ. — ᵇ) Ś1 कृत्वा; K मत्वा (for अन्यैर्). Ś1 K1 मुनिरुदार°. — ᶜ) T1 G2 ते समापयितुं; G4 M तं (G4 स) समापयिषु°. Cd cites समापिपयिषु° (as in text). — ᵈ) S निर्ऋतेः (G5 नृपतेः; G6 ऋते यं) प्रियकाम्यया.

9 ᵃ) T G (except G3) ततः (for तथा). — ᵇ) Ś1 Ñ V1 B Dn D1.4.5 T1 G2 °क्रतुः; T2 G1.3-6 M °तपाः. — ᶜ) K0.2.3 Ñ1 T1 G3 M3.5 तमाजग्मुर्; K4 Ñ2.3 V1 B D तत्रा°; T2 G1.2.4-6 M6-8 तदा°. K0.2.3 Ñ1.3 T G2-4 M3.5 अमित्रघ्नं; K1 निमित्तज्ञा; K4 अमित्रघ्नं. — ᵈ) K1 G3 M7 जीवितेच्छया G3 (hapl.) om. from जीविते-प्सया (in 9ᵈ) up to रक्षसां (in 10ᵃ).

10 G3 om. up to रक्षसां (cf. v. l. 9). — ᵃ) T1 G2 स (for तु). G6 यथा तेषां. — ᶜ) T1 G2 वचोऽभ्येत्य. — ᵈ) A few MSS. परासरम्. T1 G2 अनिंदितं (for अरिं°).

11 Before 11, S ins. पुलस्त्यः. — ᵃ) K0 Ñ3 तातात्पविघ्नं ते; K3 Ñ1 तातान्य°; K4 B3 तपो ह्य(K4 sup. lin. °स्य; B3 °स्य)वि°; D2 तात न विघ्नस्ते; D5 S

1875 81 11 197 11 अजानतामदोषाणां सर्वेषां रक्षसां वधात् ॥ ११

प्रजोच्छेदमिमं मह्यं सर्वं सोमपसत्तम ।
अधर्मिष्ठं वरिष्ठः सन्कुरुषे त्वं पराशर ।
राजा कल्माषपादश्च दिवमारोढुमिच्छति ॥ १२
ये च शक्त्यवराः पुत्रा वसिष्ठस्य महामुनेः ।
ते च सर्वे मुदा युक्ता मोदन्ते सहिताः सुरैः ।
सर्वमेतद्वसिष्ठस्य विदितं वै महामुने ॥ १३
रक्षसां च समुच्छेद एष तात तपस्विनाम् ।
निमित्तभूतस्त्वं चात्र क्रतौ वासिष्ठनन्दन ।
स सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते ॥ १४
एवमुक्तः पुलस्त्येन वसिष्ठेन च धीमता ।
तदा समापयामास सत्रं शाक्तिः पराशरः ॥ १५
सर्वराक्षससत्राय संभृतं पावकं मुनिः ।
उत्तरे हिमवत्पार्श्वे उत्ससर्ज महावने ॥ १६
स तत्राद्यापि रक्षांसि वृक्षानश्मान एव च ।
भक्षयन्दृश्यते वह्निः सदा पर्वणि पर्वणि ॥ १७

इति श्रीमहाभारते आदिपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

---

तपस्विघ्न ते (T1 G2 3 तपसि तेविघ्न) Cd cites अपविघ्न (as in text) — c) K (except K1) ह्यदोषाणां (for अदो°)

12 a) Ś1 K2 T G (except G6) प्रजाछेदम् N1 3 Da1 T1 G3 M3 इद मह्य — b) K4 न सर्वं कर्तुमर्हसि, Ñ2 V1 B D न हि (D2 नाल) कर्तुं त्वमर्हसि, T2 G2 4 5 मा कृथा(G2 4 कार्षी)स्तापसोत्तम — After 12ab, K4 Ñ2 V1 B D (except D2) ins

1792* नैष तात द्विजातीनां धर्मो दृष्टस्तपस्विनाम् ।
शम एव परो धर्मस्तमाचर पराशर ।

— c) Ś1 वसिष्ठ ; M6-8 महर्षि° — d) Da D5 G5.6 पराशर — After 12cd, all MSS except T2 G1 5 6 M ins :

1793* शक्तिन चापि धर्मज्ञ नातिक्रान्तुमिहार्हसि ।
प्रजानां च समोच्छेद न चैव कर्तुमर्हसि ।
शापाद्धि शक्तेर्वासिष्ठ तत्तावदुपपादितम् ।
आत्मजेन सरोषेण शक्तिर्नीत इतो दिवम् ।
न हि त राक्षस कश्चिच्छक्तो भक्षयितु मुने । [5]
आत्मनैवात्मनस्तेन सृष्टो मृत्युस्तदाभवत् ।
*निमित्तभूतस्तत्रासीद्विश्वामित्र पराशर ।*

[ (L. 1) Om in D2 Ś1 K शक्तिण B Da Dn D1.4 शक्तिं (B °क्तिं) चापि हि; T1 शक्तिमानपि; G3-4 शक्तिना चापि K3 B (except B5) Da Dn D1 4 धर्मज्ञ; D5 धर्मिष्ठ B6 तात श्रातुमिहार्हसि; G3-4 नातिक्रमितुमर्हसि — (L. 2) N1 3 B D प्रजायाश्च K1 Ñ1 3 समुच्छेद Ś1 K2 चैव त्व कर्तुं°; K0 3-4 Ñ1 न वै त्व कर्तुं°; Ñ3 न त्वेव कर्तुं°; T1 G3-4 न वै कर्तुं त्वम° — (L. 3) Ś1 K1-3 B5 Da1 D1 शक्तेर्; T1 G3 शक्तिर् A few MSS वासिष्ठ Ñ V1 B D (except D5) तदा तदुप°; T2 G3-4 तदा (G3 तेन) शाशा विनाशिता — (L. 4) Ñ2 V1 B D स दोषेण Ś1 K (except K0) D1 3 शक्तिर् K4 गत (for नीत) — (L. 5) K2 रणे (for मुने) — After line 5, T1 G3-4 ins

1794* वासिष्ठा भक्षिताश्चासन्कौशिकोत्सृष्टरक्षसा ।
शाप न कुर्वन्ति तदा चाक्शक्ता यपरायणम् ।
क्षमावन्तोऽदहन्देह देहमन्यं व्रजन्ति हि ।

— (L. 6) Ñ2 3 V1 Dn G3 दृष्टो, T1 G3 4 नष्टो (for सृष्टो) — (L. 7) K3 Ñ1 B6 D (except D2 5) निमित्तमात्रस् K2 4 प्रतापवान् (for परा°) ]
— e) Da S (except T1 G2 3) तु (for च) — f) N3 V1 B D (except D5) दिवमारुह्य मोदते

13 a) K2 B1 3 Da1 शत्र्यवरा K0 3-4 D5 Cd ये शक्त्य(K3 °त्रय)वरजा पुत्रा — b) A few MSS वशिष्ठस्य K1-3 Ñ V1 B1 2 3 Dn D1.3 T2 G (except G1) महामुने; B6 Da M6 8 महात्मन ; D4 महामते — K1.4 (hapl.) om. 13e–13f — c) K3 ते सर्वे च T1 G1 3 दिव प्राप्ता (for मुदा युक्ता) — d) D4 मुदिता सु°. — e) T1 G2 3 वसिष्ठेन; a few MSS वशिष्ठस्य — f) Ś1 K3 B5 महामुने°

14 b) M7 8 एष तेषां, M6-8 एव तात — c) B6 Da निमित्तमात्रस् Ñ3 चापि; M6-8 चास्य T1 G2 3 प्रजोच्छेदस्तथा चाच — d) B1(m as in text) 4 D5 S कृतो; B5.6 Da D4 क्रतोर् (for क्रतौ) — e) Ñ2 3 V1 B6 Da सत्रस्थ K (except K1) D5 सत्राद्विरम भद्र ते.

15 Before 15, Ś1 K1 T1 G2 3 ins गन्धर्व ; K0.3-6 Ñ3 V1 B D (except Dn1) गन्धर्व उ°. — b) D5 G1 वसिष्ठेन महात्मना — c) Ś1 तद्वै (for तदा) — d) Ś1 K4.5 D1.4.5 तदा; K4 सत्तु; T1 स त (for सत्र) Ś1 K2 3 D1 4 5 शाक्तो (T1 शाक्ति ; K1.4 शक्ति ; Ñ3 V1 B1 Da Dn D1.4 शाक्तो (T1 D1 °क्तो; Da1 शाक्तो); S शाक्ति° Ñ2 V1 B D महामुनि (Da महानृषि°) (for परा°)

16 a) Ñ1 स त (for सर्व) K (except K1) D4

# १७३

अर्जुन उवाच ।
राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे ।
कारणं किं पुरस्कृत्य भार्या वै संनियोजिता ॥ १
जानता च परं धर्मं लोक्यं तेन महात्मना ।
अगम्यागमनं कस्माद्वसिष्ठेन महात्मना ।
कृतं तेन पुरा सर्वं वक्तुमर्हसि पृच्छतः ॥ २
गन्धर्व उवाच ।
धनंजय निबोधेदं यन्मां त्वं परिपृच्छसि ।
वसिष्ठं प्रति दुर्धर्षं तथामित्रसहं नृपम् ॥ ३
कथितं ते मया पूर्वं यथा शप्तः स पार्थिवः ।
शक्तिना भरतश्रेष्ठ वासिष्ठेन महात्मना ॥ ४
स तु शापवशं प्राप्तः क्रोधपर्याकुलेक्षणः ।
निर्जगाम पुराद्राजा सहदारः परंतपः ॥ ५
अरण्यं निर्जनं गत्वा सदारः परिचक्रमे ।
नानामृगगणाकीर्णं नानासत्त्वसमाकुलम् ॥ ६
नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम् ।
अरण्यं घोरसंनादं शापग्रस्तः परिभ्रमन् ॥ ७
स कदाचित्क्षुधाविष्टो मृगयन्भक्षमात्मनः । C. 1. 6696 B. 1. 182. 6 K. 1. 196. 11

---

°नाशाय; T1 G1 °संत्रासं. — b) Ś1 D4 T2 G3.6 संभूतं. Ñ2 V1 B6 D (except D2.3) तदा (for मुनिः). — d) Ś1 महामुने; K (except K1) °यशाः; G6 °मुनिः.

17 a) T1 G2 स तु तत्रापि र°. — b) K1 Ñ V1 Dn D4 T2 G M3.4 अश्मन (G3 °क); Da D2 अश्मानम्.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ, followed by और्वोपाख्यान; T1 संभव. Ś1 K Ñ3 B D T2 G1.4 M3.5 (*all om. the sub-parvan name*) mention only और्वे (D5 वासिष्ठ; T2 G4 M3.5 वासिष्ठोपाख्यान; G1 और्वोपाख्यान); Ñ3 B6 Dn D1.2.4 add समाप्त. — *Adhy. name:* K0 शाक्ते राक्षससत्रसमाप्तिः; K2 सत्रसमाप्तिः; K3 T2 G4.6 राक्षससत्रं; K4 शाक्ते राक्षससत्रं; D5 राक्षससंभ्रमं; M3.5 राक्षससत्रनिवर्तनं (M5 °त्रकथनं). — *Adhy. no.* (figures, words or both): Dn3 T1 180; D4m 183; T2 G3-5 131; G1 133; G6 M 132. — *S'loka no.:* Dn 23; M3 19. — *Aggregate s'loka no.:* Dn3 6857.

## 173

1 *Before* अर्जुनः, T1 G2-6 ins.:

1795* गन्धर्वः ।

पुनश्चैव महातेजा विश्वामित्रजिघांसया ।
अग्निं संभृतवान्घोरं शाक्तेयः सुमहातपाः ।
वासिष्ठसंभृतश्चाग्निर्विश्वामित्रहितैषिणा ।
तेजसा वह्नितुल्येन प्रस्तः स्कन्देन धीमता ।

— Ś1 K1 S om. उवाच. — b) D5 वेदविदां. — d) Ñ1.3 भार्या या. G3 संप्रयो°. T1 G2.3 भार्या सम्यङ्नियोजिता.

2 a) K (except K1) Ñ1 परमं; Ñ2.3 V1 B (except B3) Dn D1 धैं परं; D2 अपि परं. Da लौक्यं (for धर्मं). — b) K (except K1) D5 लौकिकं च; Ñ2.3 V1 B Da Dn D1.2.4 वसिष्ठेन; S (except G1.6) Cd लौक्यं तेन. S (except T1 G2.3) महर्षिणा. — d) Some MSS. वशिष्ठेन. Ñ1 वसिष्ठेन महर्षिणा; Ñ2.3 V1 B D कृतं (Ñ3 पुरा) तेन महर्षिणा. — After 2cd, N T1 G1-3 ins.:

1796* अधर्मिष्ठं वसिष्ठेन कृतं चापि पुरा सखे ।
[ Ś1 K N3 B1.6 D2 T1 G1 वशिष्ठेन. T1 G1 कृतिनापि. ]

T1 G2.3 cont.:

*1797** तत्र मे संशयो जातः कार्याकार्यविनिश्चये ।

— e) N एतन्मे (K0.1.3 एतं मे) संशयं सर्वं; T1 G2.3 संशयप्रतिषेधं वै. — f) Ñ3 V1 B D (except D5) छेत्तुमर्हसि. K0.2.3 पृच्छते. T1 G2.3 तन्मे (G3 सं मे) त्वं वक्तुमर्हसि.

3 Ś1 K1 S om. उवाच. — b) G1 यथास्त्वम्. S (except T1 G2.3 M5) अनुपृच्छसि. — c) K (except K1) Ñ2.3 V1 D (except D2.4) M (except M3) दुर्धर्षं. — d) S (except T1 G2.3) प्रति (for नृपम्).

4 a) Ś1 Ñ1.2 V1 B (except B1) D (except D5) सर्वं (for पूर्वं). — b) Ś1 K1 श्रोतुमर्हसि पृच्छतः (cf. 2d). — Ś1 K1 *om.* 4cd. — c) K (K1 om.) B3.6 Da D1 शक्तिणा. — d) *A few* MSS. वाशिष्ठेन.

5 a) Ś1 पापवशं. — b) Ñ1.3 B1.3 D2 °पर्याकुलः श्वसन्. — d) Ś1 K1 दारैः. Ś1 K1.2 Da2 D1 G3 °तप.

6 G1 om. 6cd. — c) G3.6 M5 °समाकीर्णं. — M6-8 om. 6d-7a.

7 M6-8 om. 7a (cf. v. l. 6). — b) N3 T1 G1

दद‍र्श सुपरिक्लिष्टः कस्मिंश्चिद्वननिर्झरे ।
ब्राह्मणीं ब्राह्मणं चैव मैथुनायोपसंगतौ ॥ ८
तौ समीक्ष्य तु वित्रस्तावकृतार्थौ प्रधावितौ ।
तयोश्च द्रवतोर्विप्रं जगृहे नृपतिर्बलात् ॥ ९
दृष्ट्वा गृहीतं भर्तारमथ ब्राह्मण्यभाषत ।
शृणु राजन्वचो मह्यं यत्त्वां वक्ष्यामि सुव्रत ॥ १०
आदित्यवंशप्रभवस्त्वं हि लोकपरिश्रुतः ।
अप्रमत्तः स्थितो धर्मे गुरुशुश्रूषणे रतः ॥ ११
शापं प्राप्तोऽसि दुर्धर्ष न पापं कर्तुमर्हसि ।
ऋतुकाले तु संप्राप्ते भर्त्रास्म्यद्य समागता ॥ १२
अकृतार्था ह्यहं भर्त्रा प्रसवार्थश्च मे महान् ।
प्रसीद नृपतिश्रेष्ठ भर्ता मेऽयं विसृज्यताम् ॥ १३
एवं विक्रोशमानायास्तस्याः स सुनृशंसकृत् ।
भर्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम् ॥ १४
तस्याः क्रोधाभिभूताया यदश्रु न्यपतद्भुवि ।
सोऽग्निः समभवद्दीप्तस्तं च देशं व्यदीपयत् ॥ १५
ततः सा शोकसंतप्ता भर्तृव्यसनदुःखिता ।
कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा ॥ १६
यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत् ।
प्रेक्षन्त्या भक्षितो मेऽद्य प्रभुर्भर्ता महायशाः ॥ १७
तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः ।
पत्नीमृतावनुप्राप्य सद्यस्त्यक्ष्यसि जीवितम् ॥ १८

---

°लतायुतं (Ñ3 °वृतं); M3 °समाकुलं. — f) T2 G4-6 घोरसंकाशं; Cd as in text.

8 a) D5 कदाचित्स (by transp.). G6 समाविष्टो. — b) K0 Ñ V1 B D T2 G3 भक्ष्यम्. — c) Ś1 K (except K1) ददृशे. — d) K0.2.4 Ñ1 D5 गिरिगह्वरे; Ñ2 V1 Dn D1 निर्जने वने; T2 G4-6 सुमनोहरे (for वन°). — e) Ñ V1 B6 D (except D3.4) ब्राह्मणं ब्राह्मणीं (by transp.). — f) Ś1 Ñ V1 B Dn D1.2.5 M3 मिथुनाय.

9 a) K0.2.4 तं (for तौ). Ñ V1 B D तौ तं वीक्ष्य सु(Ñ1.3 D5 समीक्ष्य)वित्रस्तौ; S तौ (G1 M6-8 तं) समीक्ष्य च वित्रस्तौ. — b) D4 (by corr.) अकृतार्थावधावतां. — c) Ñ1.2 V1 B Da Dn D1 प्र-; D4 T2 G4-6 वि-; D2 तु (for च). — d) Ñ1.2 V1 B D (except D5) M3 जग्राह.

10 ab) K (except K1) D5 गृहीतं प्रेक्ष्य भर्तारं ब्राह्मणी (D5 °णं) समभाषत. — c) Ñ1.2 V1 B D (except D5) राजन्मम वचो. — d) Some S MSS. त्वा (for त्वां).

11 a) Ś1 °वंशसंभूतः. — b) Ś1 K D5 सर्व- (for त्वं हि). Ñ V1 B D T1 G2.3 M3 लोके परि° (B5 °षु वि°; D5 -पि वि°; G6 च वि°). — c) K0 स्थिरो धर्मे. — After 11, D5 marg. sec. m. ins.:

1798* वैष्णवोऽसि महीपाल रविवंशविवर्धन ।
येन त्वया पुरा विष्णुस्तोषितः शुभकर्मणा ।
आत्मनं तृणवत्कृत्वा जीवितं हरयेऽर्पितम् ।
तदासि रक्षितस्त्वं वै विष्णुना प्रभविष्णुना ।

12 a) Ñ1.2 शापप्राप्तोपि; Ñ3 V1 B D (except D5) शापोपहत. — c) K3 भर्त्रा ह्यद्य समा°; Ñ3 V1 B5 Dn D1 भर्तृव्यसनकर्शिता; D5 भर्ता मेद्य समागतः; S भर्त्राहं (T1 G1.3 M1 भर्तारं) समुपा°.

13 a) D1 स्वयं (for ह्यहं). Ñ3 S अकृतार्थिन्यहं भ (T1 G2.3 अकृतार्थास्मि भद्रं ते). — b) Ñ1.2 V1 B1(m in text).3.5 D (except Da) प्रसवार्थं समा(B1 इहा)गत — c) Ñ3 नृपशार्दूल. — d) K (except K1) Ñ3 V1 D भयं मे; Ñ1 S मम (for मेऽयं). Ś1 K D5 विमुच्यत Ñ3 विसर्जतां.

14 a) K0.2.4 D5 लालप्यमानायाः; G1 विशोक — b) K0 तु सु; K3.3 Ñ2.3 V1 B1.6 Dn D1.5 तु स; I Ñ V1 B3.5 Dn D1.5 G3.5 -नृशंसवत्; स हि (for स सु-). — d) Ś1 K Ñ1.3 D5 पशुं (for मृगं). T1 G2 व्याघ्र मृगशिशुं यथा.

15 G3 (? hapl.) om. 15b–17a. — b) K0 Ñ3 यदा K3.4 Ñ1.2 V1 B Da Dn D1.4.5 यानि; S (G3 om.) तद (for यद्). K2.4 N V1 B Da Dn D1.5 T2 G1.2.4.6 M (by corr.) अश्रूण्यपतन्भुवि. D2 अश्रूण्यभ्यपतन्भुवि — c) Ś1 दीप्तः समभवत् (by transp.). — d) K1.2. व्यदीपयन्.

16 G3 om. 16 (cf. v. l. 15). — a) K4 शोकसंवीता Ñ1 °संप्राप्ता. — b) Ñ V1 B6 Da D2.4 °कर्शिता; B1.2 Dn D1 °कर्षिता (for °दुःखिता). — c) T1 G2.3 राजानं (for राजर्षिं).

17 G3 om. 17a (cf. v. l. 15). Before 17, B1 ins ब्राह्मण्युवाच. — a) G1 यस्मान्मय्यकृतार्थायां. — c) K3 T1 G2.3 पश्यन्त्या. Ñ1 भक्षितो ह्येष; B1m भक्षितश्चाद्य. — d) Ñ1 M3 भर्ता मम; Ñ3 V1 B1 D (except D3.4.5) प्रियो भर्ता.

18 b) K (except K1) G4 M1 °विक्षितः; Ñ1 D5 °वीक्षितः; D2 T2 G1 °दूषितः; T1 G2 °कर्शितः; G3

यस्य चर्षेर्वसिष्ठस्य त्वया पुत्रा विनाशिताः ।
तेन संगम्य ते भार्या तनयं जनयिष्यति ।
स ते वंशकरः पुत्रो भविष्यति नृपाधम ॥ १९
एवं शप्त्वा तु राजानं सा तमाङ्गिरसी शुभा ।
तस्यैव संनिधौ दीप्तं प्रविवेश हुताशनम् ॥ २०
वसिष्ठश्च महाभागः सर्वमेतदपश्यत ।
ज्ञानयोगेन महता तपसा च परंतप ॥ २१

मुक्तशापश्च राजर्षिः कालेन महता ततः ।
ऋतुकालेऽभिपतितो मदयन्त्या निवारितः ॥ २२
न हि सस्मार नृपतिस्तं शापं शापमोहितः ।
देव्याः सोऽथ वचः श्रुत्वा स तस्या नृपसत्तमः ।
तं च शापमनुस्मृत्य पर्यतप्यद्भृशं तदा ॥ २३
एतस्मात्कारणाद्राजा वसिष्ठं संन्ययोजयत् ।
स्वदारे भरतश्रेष्ठ शापदोषसमन्वितः ॥ २४ C. 1. 6912 B. 1. 182. 26 K. 1. 193. 29

इति श्रीमहाभारते आदिपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥ समाप्तं चैत्ररथपर्व ॥

---

°पीडितः. — c) Ñ1 °स्याप्य (for °प्राप्य). — d) K1 परि- (for सद्य). — After 18, D4 (marg. sec. m.) T2 G4 (marg.).5 ins.:

1799* तेन प्रसाद्यमाना सा प्रसादमकरोत्तदा ।

19 a) K (except K1) D5 वसिष्ठस्य ऋषेर्यस्य; T1 G3 ऋषेर्यस्माद् (G2 °यस्य) वसिष्ठस्य. — b) K3 G3 त्वया पुत्रो विनाशितः. — e) T1 G6 संगम्य. — f) Ś1 K1 Ñ1 नराधिप; B1.3 m D2 नृपोत्तम; G1.3.4 M5 नराधम.

20 a) T1 शप्त्वा महीपालं. — b) S (except M5) सादांगिरसी. — d) Ñ1 पावकं प्रविवेश ह.

21 a) Ko.2 Da T2 G3.6 M °भाग. — b) Ñ2 V1 B D (except D5) अवैक्षत. — c) Ś1 K1 मनसा (for महता). — d) K3.4 Da1 T G4.5 °तपः. — After 21, Ko.2 ins.:

1800* न चाप्यत्र महाबाहो अधर्मः प्रतिपद्यते ।
ब्राह्मणो यदपत्यं हि प्रार्थितः संप्रयच्छति ।
यदा तु कामतो गच्छेत्परनारीं नरो नृप ।
तदास्य परदारोत्थमधर्मस्य फलं भवेत् ।
अपकल्कस्तु राजेन्द्र निश्चीर्येतद्द्विजोत्तमः ।
नान्यतो भरतश्रेष्ठ स हि लोकगुरुर्यतः ।

22 a) K3 G1 तु (for च). — b) Ñ3 शापेन महता. K (except K1) D5 तदा. — c) S निपतितो. — d) S भार्यया स नि° (T G6 संनि°; G3 परि°).

23 a) Ñ2 V1 B D (except D4) स नृपः; N3 शापं तं (for नृपतिः). — b) T1 शापं तं (by transp.). Ñ3 नृपः कामेन मोहितः. — c) Ś1 K1 तद्धि वचः; Ko.2–4 तद्वचनं (for सोऽथ वचः). — d) Ñ V1 B D संभ्रांतो (for स तस्या). Ś1 Ko.1 °सत्तम. S विसंज्ञः समपद्यत. — K3 om. 23c–24d. — e) Ñ V1 B D तं शापमनुसंस्मृत्य. — f) Ś1 ततः (for तदा).

24 K3 om. 24 (cf. v. l. 23). — b) Ko.3.4 G3.5.6 M5 संनियोज°; D2 स व्ययोज°; D5 समयोज°. — c) D5 स्वपत्न्यां. Ñ3 V1 B (except B6) Da Dn D1.2 स्वदारेषु नर(B6 नृप)श्रेष्ठ. — d) G1 पाप°. — After 24, D4 (marg. sec. m.) T2 G3.5.6 (om. line 5) ins.:

1801* यदा कल्माषपादस्तु राक्षसत्वमवाप सः ।
तदा वसिष्ठः कुरुणा यज्ञार्थं संवृतोऽभवत् ।
यदा कल्माषपादस्तु राक्षसत्वं विसृष्टवान् ।
तदा तेनैव राज्ञा तु वसिष्ठः संवृतोऽभवत् ।
एवं वसिष्ठो युष्माकं पुरोधाः संवृतोऽभवत् ।

Colophon om. in T1. — *Major parvan*: T2 G1.3.4–6 M संभव° (for आदि°). — *Sub-parvan*: Ñ1.2 V1 चैत्ररथ, followed by वासिष्ठोपाख्यान. Ś1 K1–4 B5.6 Da Dn D1.2 T2 G1.4 M5.6–8 (all om. the sub-parvan name) mention only वासिष्ठ (Ś1 K1–4 D2 और्व; T2 G1.4 M5.6–8 वासिष्ठोपाख्यान); Ś1 K1.3.4 Dn D1.2 M5.6–8 add समाप्त. — *Adhy. name*: Ko.2.4 D5 मित्रसहशाप-वर्णनं (D5 °सहशापः); T2 G1.4.6 वसिष्ठापचारकथनं (G6 °चारं). — *Adhy. no.* (figures, words or both): Dn3 181; D4m 184; T2 G2–5 132; G1 134; G6 M 133. — *S'loka no.*: Dn M3 26. — *Aggregate s'loka no.*: Dn3 6882.

## 174

1 Ś1 K1 S om. उवाच. — ab) S °मनुरूपं वै त्वं हि गंधर्वसत्तम. — c) Ko.3 D5 °हितं त(K3 स; D5 त्व)माचक्ष्व; S °हितं ममाचक्ष्व.

2 Ś1 K1 S om. उवाच (G5 om. the ref.). — a) G5 M6–8 एव (for एष). M5.6 कनीयान्वै देवलस्य. — b) T2

## १७४

अर्जुन उवाच ।
अस्माकमनुरूपो वै यः स्याद्गन्धर्व वेदवित् ।
पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव ॥ १
गन्धर्व उवाच ।
यवीयान्देवलस्यैष वने भ्राता तपस्यति ।
धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ ॥ २
वैशंपायन उवाच ।
ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि ।
गन्धर्वाय तदा प्रीतो वचनं चेदमब्रवीत् ॥ ३
त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम ।
कर्मकाले ग्रहीष्यामि स्वस्ति तेऽस्त्विति चाब्रवीत् ॥४
तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह ।
रम्याद्भागीरथीकच्छाद्यथाकामं प्रतस्थिरे ॥ ५
तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमं तु ते ।
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ॥ ६
तान्धौम्यः प्रतिजग्राह सर्ववेदविदां वरः ।
पाद्येन फलमूलेन पौरोहित्येन चैव ह ॥ ७
ते तदाशंसिरे लब्धां श्रियं राज्यं च पाण्डवाः ।
तं ब्राह्मणं पुरस्कृत्य पाञ्चाल्याश्च स्वयंवरम् ॥ ८
मातृषष्ठास्तु ते तेन गुरुणा संगतास्तदा ।
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ॥ ९
स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः ।

---

G3 4 5 हि तप्यति, G6 तपस्विन° — c) S (except G3) उत्कचके K1 [ऽ]त्यर्थं (for तीर्थे) — d) Ś1 K (except K3) Ñ3 D4 5 वृणीध्व, B6 G1 3 वृणुध्व, D2 वृणीथ, T G2 4–6 M वृणीध्व Ś1 यथेच्छथ, K2 यदीप्सथ, K4 D3 यदिच्छथ, Ñ3 B6 S यदी( T2 G3 4 M5 °दि)च्छसि

3 Ś1 K1–3 D2 S om उवाच, K4 om the ref — a) G1 अथोर्जुनस्तम् M तमादाय — b) Ś1 च यथा°, T1 G3 भरतर्षभ — c) B5 तत , G6 ददौ (for तदा)

4 Before 4, T2 G (except G3) ins अर्जुन — a) K2 D4 M5 तात तिष्ठतु — c) K0 3 4 Ñ2 3 V1 B D कार्यकाले, T1 G3 युद्धकाले, G2 काम्यकाले Ñ3 V1 Dn D1 4 ग्रहीष्याम

5 Before 5 S (except T2 M3 5) ins वैश° — a) Ñ1 अभिसप्रेक्ष्य, G1 °गम्य; M5 इति सपूज्य G3 तावन्योन्यौ च स° — b) Ñ1 B6 D1 5 G1 3 5 M5 पांडवश्च T1 ते, M6–8 हि (for ह) — c) G2 4 ततो (for रम्याद्) K4 Ñ2 3 V1 B D T1 G3 4 भागीरथीतीराद् (D5 °कक्षाद्), Ñ1 °कूलाद्

6 a) T1 G3 उत्कलित, T2 G1 4–6 M उत्क°; G2 उत्कोचन (cf v 1 2) — b) K0 3 B3 D5 प्रति, T1 G3 च ते (for तु ते) G6 °श्रमातिके — c) K1 अब्रुवन्; K3 समूचु° (for त वव्रु )

7 a) S ताश्चापि — b) Ś1 सर्वैः B1 D2 सर्वान् (for सर्व ) Ś1 K D5 धर्मभृतां (K1 °विदां) वर — c) K4 Ñ3 V1 B D (except D2 5) धन्यन (for पाद्ये°) — d) Ś1 K4 T2 G चैव हि

8 a) Ñ1 3 B (B5 marg ) Da D2 S (except T1, G3 corrupt) तेन चाशसिरे (B5 orig ते चाथाश°), Ñ2 V1 Dn D1 ते समाश°, D4 5 ते चाशश° Ś1 K0 लब्धु, D1 G3 लब्ध्वा, G1 लक्ष्य — b) G1 लब्ध (for श्रिय) — D6 reads 8c–9d after 12 — c) Ñ V1 B D ब्राह्मण त (D4 ते) — d) Ñ V1 B D (except D4) पाचाली च (Ñ3 चै), T1 याज्ञसेन्या Ñ V1 B D T1 G1 3 °वरे

9 D5 reads 9 after 12 (cf v 1 8) — a) K1 G1 तु तेनैव, B1 महेष्वासा , T2 G2 4 5 ततस्तेन K2 सह मात्रा ततस्ते वै; Ñ2 V1 B (B1 marg ) D पुरोहितेन तेनाथ Cd cites मातृषष्ठा (as in text) — b) M गता (for तदा) Ś1 सगता गुरुणा तदा (by transp ), T1 G3 सहिता (G3 सगता) गुरुणा तत , T2 G1 2 4–6 गुरुणा सह सगता — c) Ś1 K अथ, T1 G3 तदा (for इव)

10 After 10ab, S (for T1 G3 see below) ins

1802* वेदविच्चैव वाग्मी च धौम्य श्रीमान्द्विजोत्तम ।
तेजसा चैव बुध्या च रूपेण यशसा श्रिया ।
मन्त्रैश्च विविधैर्धौम्यस्तुल्य आसीद्बृहस्पते ।
स चापि विप्रस्तान्मेने स्वमायाम्यधिका भुवि ।

[ (L. 1) T1 G3 धर्मविच्चैव — T1 G3 read line 4 after 11ab ]

— c) G1 ते तु (for तेन) K0 सर्वविदा; T1 G3 धर्मविद् — d) K0 Ñ1 3 D2 सर्वविद ; Ñ2 V1 Dn3 धर्मविद°; G3 Dn1 n2 D1 धर्मविदा T1 सत ; T2 G1 2 4–6 M वृता; G3

तेन धर्मविदा पार्था याज्याः सर्वविदा कृताः ॥१०
वीरांस्तु स हि तान्मेने प्राप्तराज्यान्स्वधर्मतः ।
बुद्धिवीर्यबलोत्साहैर्युक्तान्देवानिवापरान् ॥ ११
कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः ।
मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम् ॥ १२

इति श्रीमहाभारते आदिपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## १७५

वैशंपायन उवाच ।
ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः ।
प्रययुर्द्रौपदीं द्रष्टुं तं च देवमहोत्सवम् ॥ १
ते प्रयाता नरव्याघ्रा मात्रा सह परंतपाः ।
ब्राह्मणान्ददृशुर्मार्गे गच्छतः सगणान्बहून् ॥ २
तानूचुर्ब्राह्मणा राजन्पाण्डवान्ब्रह्मचारिणः ।
क्व भवन्तो गमिष्यन्ति कुतो वागच्छतेति ह ॥ ३
युधिष्ठिर उवाच ।
आगतानेकचक्रायाः सोदर्यान्देवदर्शिनः ।
भवन्तो हि विजानन्तु सहितान्मातृचारिणः ॥ ४ C. 1 6928 B. 1 184 4 K. 1. 185 4

---

पुरा (for कृताः). G3 सर्वविद्याविशारदाः.

11 a) S मेनिरे सहिता वीराः (T1 G3 सहिता मेनिरे राज्यं). — b) T2 G1.2.4-6 M प्राप्तं राज्यं (for प्राप्तराज्यान्). After 11ab, T1 G3 read T1 G3 प्राप्तमित्येव भारत. — After 11ab, T1 G3 read line 4 of 1802*. — c) G1 तेजोवीर्य°. — d) K4 °द्देवानिवांबरान्; Ñ1 °निवामरान्; Ñ2 V1 B D (except D5) °निव द्विजः; S (except T1 G3) देवा इवापरे.

12 a) Ś1 K (except K3) मनुजाधिप (K4 °पं). — d) B3 Dn3 ते; G4 M6-8 तु (for तं). D1 पांचाल्यस्य स्वयं°; D5 पांचालनगरेप्सितं; Cd as in text. — After 12, D5 reads 8c-9d.

Colophon om. in K1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K2-4 B1.6 Dn1.n3 M6-8 द्रौपदीस्वयंवर; Ñ1.2 V1 B3 D5 चैत्ररथ; D1 स्वयंवर; T1 संभव. — *Adhy. name:* K0.4 D2 धौम्यपौरोहित्यं; Ñ1.2 V1 D5 धौम्यपुरोहितकरणं; T2 G4.6 धौम्यवरणं (T2 °णनं); M पुरोहितवरणं. — *Adhy. no.* (figures, words or both): Dn3 182; D4m 185; T1 181; T2 G2-5 133; G1 135; G6 M 134. — *S'loka no.:* Dn 12; M3 14. — *Aggregate s'loka no.:* Dn3 6894.

### 175

☞ S (except G6) reads this adhy. (for the first time) after adhy. 156 and *repeats* it here (with v. l.); T1, however, reads here stanza 1 only of this adhy. (inserted as the first st. of adhy. 176), omitting the rest (cf. App. I, No. 96).

1 Ś1 K (except K0) S om. उवाच. — a) Ś1 K D4 D5 Cd कुरुशार्दूला (K1 °ल). — After 1ab, T1 M3.5 ins.:

1803* ब्रह्मरूपधराः पार्था जटिला ब्रह्मचारिणः ।

— c) Ś1 लब्धुं (for द्रष्टुं). — d) Ñ2 V1 B Dn D1.4.5 T G2.4-6 देवं महो°; D3 दिव्यं महो°; Cd as in text (cf. 11, 20).

2 a) K0.4 Ñ1.2 V1 B3.6 Dn D1.4 सह मात्रा (by transp.); B1m D4 मातृषष्ठाः (D4m सह मात्रा). Ś1 K1 परंतप; D2 महाबलाः (D4m as in text). — c) T1 ब्राह्मणान्गच्छतोपश्यन्. — d) T1 पांचालान् (for गच्छतः). K1 गणशो; Ñ V1 B D G3 संगतान्; T2 G1.2.4-6 M सहितान् (for सगणान्).

3 a) K1m Ñ2.3 V1 B Dn D1.4 त (or ते) ऊचुर्; G3 तान्वब्रुर्. T1 अथ ते ब्राह्मणा ऊचुः. — b) K4 Dn3 M5 पांडवा. Ñ3 B3 D4 T1 G1 धर्मचारिणः. — d) K0 च; K3 हि (for ह). K1m Ñ3 V1 B D कुतो वाभ्या(B3 °द्या)गता इह (B1 इति; D5 °गतेति च).

4 Ś1 पांडवा ऊचुः(!); K1 पांडवाः; K2.3 S युधिष्ठिरः. — G3-4 om. 4 and the ref. before 5. — a) T2 प्रयातानेकच°. — b) Ś1 K1 देवरूपिणः; K3 °दर्शनाः; Ñ2 V1 B D (except D5) एकचारिणः; G1 °वर्णिनः; G3 °शीलिनः. — c) Ś1 K2.4 Ñ1.2 G4 M3.6-8 [ऽ]भि; K1 T2 G6 M5 [ऽ]पि; Ñ3 V1 B D4 Dn D1.2.4 वै (for हि). K0 D5 T1 ह्य(T1 न्नो)भिजानंतु. — d) T2 G1.5.6 M संगतान् (for सहितान्). Ñ3 मातृसारिणः; G3 मित्रचारिणः. K1 Ñ1.2 V1 B D (except D5) सह मात्रा द्विजर्षभाः (K1 प्रचारिणः); K2 जनन्या सहितान्द्विजान्.

ब्राह्मणा ऊचुः ।

गच्छताद्यैव पाञ्चालान्द्रुपदस्य निवेशनम् ।
स्वयंवरो महांस्तत्र भविता सुमहाधनः ॥ ५
एकसार्थं प्रयाताः स्मो वयमप्यत्र गामिनः ।
तत्र ह्यद्भुतसंकाशो भविता सुमहोत्सवः ॥ ६
यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः ।
वेदीमध्यात्समुत्पन्ना पद्मपत्रनिभेक्षणा ॥ ७
दर्शनीयानवद्याङ्गी सुकुमारी मनस्विनी ।
धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ॥ ८
यो जातः कवची खड्गी सशरः सशरासनः ।
सुसमिद्धे महाबाहुः पावके पावकप्रभः ॥ ९
स्वसा तस्यानवद्याङ्गी द्रौपदी तनुमध्यमा ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति ॥ १०
तां यज्ञसेनस्य सुतां स्वयंवरकृतक्षणाम् ।
गच्छामहे वयं द्रष्टुं तं च देवमहोत्सवम् ॥ ११
राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः ।
स्वाध्यायवन्तः शुचयो महात्मानो यतव्रताः ॥ १२
तरुणा दर्शनीयाश्च नानादेशसमागताः ।
महारथाः कृतास्त्राश्च समुपैष्यन्ति भूमिपाः ॥ १३
ते तत्र विविधान्दायान्विजयार्थं नरेश्वराः ।
प्रदास्यन्ति धनं गाश्च भक्ष्यं भोज्यं च सर्वशः ॥ १४
प्रतिगृह्य च तत्सर्वं दृष्ट्वा चैव स्वयंवरम् ।
अनुभूयोत्सवं चैव गमिष्यामो यथेप्सितम् ॥ १५
नटा वैतालिकाश्चैव नर्तकाः सूतमागधाः ।

---

5 Ś1 K1 S om. ऊचुः (T G1-6 om. the ref.). — a) T2 G5.6 गच्छामोद्यैव; M7.8 गच्छथाद्यैव. Ś1 Ñ3 B Dn1.n3 D5 G1 पंचालान्. — b) K2 Ñ V1 Dn D1 निवेशने. — cd) Ś1 स (for सु-). T2 G M8 सुमहोत्सवः. — M8.6-8 (hapl.) om. from सुमहा° up to भविता (in $6^{d}$). T1 इच्छामो भवतो ज्ञातुं महत्कौतूहलं हि नः.

6 M8.6-8 om. up to भविता (cf. v. l. 5). Before 6, T G ins. ब्राह्मणाः. — a) Ś1 K0-3 Ñ V1 B D G2 एकसार्थं; K3 °सार्थः; T1 एहि सार्धं; T2 G1-4 एकसार्थाः. — b) Ñ2 Ñ1.3 V1 B D (except D5) T G स्म (for स्मो). — b) Ñ2 V1 B D तत्रैव (for अप्यत्र). — c) D5 T1 अपि (for हि). — d) Da सुमहात्मनः. T1 उत्सवो भविता महान्.

7 Da D2 (1 hapl.) om. $7^{ab}$. — cd) T2 G M वेदि°. K1 पद्मपत्रायतेक्षणा. T1 यासावयोनिजा कन्या स्थास्यते सा स्वयंवरे.

8 b) K1 Ñ1.3 B3 Da T G1-3.5.6 M यशस्विनी. G4 द्रौपदी तनुमध्यमा. — After $8^{ab}$, G4 reads $10^{cd}$ for the first time, repeating it in its proper place. — d) D5 प्रकोपिनः.

9 a) T1 जातो यः पावकाच्छूरः. — cd) K2.3 M8.8 सुसमिद्धान्महाबाहुः पावकात् etc. Ñ3 V1 B D (except D5) पावकोपमः. T1 सुसमृद्धो महाभागः सोमकानां महारथः. — After 9, T1 ins.:

1804* यस्मिन्संजायमाने च वागुवाचाशरीरिणी ।
एष शिष्यश्च मृत्युश्च भरद्वाजस्य जायते ।

10 a) T1 स्वसा तस्यैव वेद्यां या. — b) T1 जाता तस्मिन्महामखे; G6 सुकुमारी यशस्विनी (cf. v. l. $8^{b}$) — For G4 cf. v. l. 8. — cd) K1 क्रोशं; G1-3 केशात् (for क्रोशात्). Ś1 K1.4 D5 G5 प्रधावति; Ñ1.3 V1 B (except B3) Da Dn D1.3.4 M3 प्रवाति वै (M3 च) (for प्रवायति). T2 स्त्रीरत्नमभिरूपा हि श्यामा नीलोत्पलं यथा.

11 a) Ś1 Ñ3 V1 B D (except D5) यज्ञसेनस्य च सुतां; N3 G5 तां यज्ञसेनदुहितां. — b) T1 G1.2 M द्रौपदीं परम(T1 G2 °मां)श्रियं. — c) Ñ1.3 V1 B D (except D5) गच्छामो (Da Dn1.n3 D3.4 °म) वै; T2 G M संगच्छाम. T1 गच्छामस्तत्र वै द्रष्टुं. — d) Ñ3 V1 B D दिव्यं; T2 G5.6 देवं; G3-4 देशं (for देव); cf. v. l. $1^{d}$. T1 तं चैवास्याः स्वयंवरं.

12 T2 (1 hapl.) om. $12^{b}$–$13^{a}$. — c) K3 सुधियो (for शुच°). — d) M6-8 दमात्मानो. K1 D5 T1 धृत°; K4 जित°; Ñ3 B3 Da G M महा°.

13 T2 om. $13^{abc}$ (cf. v. l. 12); G1 om. $13^{ab}$. — a) D5 — b) K3 नानादेशात्समा°; T1 बलवंतो दुरासदाः. — d) Ś1 K D1.3 S समुपेष्यं(K0 G3 M6.7 °ष्यं)ति (T1 समेष्यंतीह). K3 भूरिदाः. G1 कृतार्थाश्च.

14 a) Ś1 K1 विविधोपायान् (K1 °याः); K0.3 N1 D5 M °धान्दानान्; Ñ3 °धान्देयान्; T G °धं दानं. — b) Ñ3 D1 जनेश्वराः; G1 नराधिपाः. — d) K1.3 G1 भक्ष्यभोज्यं च; K3 T1 भक्ष्यभोज्यांश्च (T1 °ज्यानि).

15 a) T1 प्रतिलभ्य. Ś1 K3 D1 G1 तु तत्सर्वं; D3 D5 ततः सर्वं. — b) T1 दृष्ट्वा कृष्णां स्वयंवरे. — cd) Ś1 K1-4 K0 D5 तत्र (for चैव). T1 यं च सा क्षत्रियं (?) तं च;

नियोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥ १६
एवं कौतूहलं कृत्वा दृष्ट्वा च प्रतिगृह्य च ।
सहास्माभिर्महात्मानः पुनः प्रतिनिवर्त्स्यथ ॥ १७
दर्शनीयांश्च वः सर्वान्देवरूपानवस्थितान् ।
समीक्ष्य कृष्णा वरयेत्संगत्यान्यतमं वरम् ॥ १८

अयं भ्राता तव श्रीमान्दर्शनीयो महाभुजः ।
नियुध्यमानो विजयेत्संगत्या द्रविणं बहु ॥ १९
युधिष्ठिर उवाच ।
परमं भो गमिष्यामो द्रष्टुं देवमहोत्सवम् ।
भवद्भिः सहिताः सर्वे कन्यायास्तं स्वयंवरम् ॥ २० C. 1. 6944 S. 1. 184. 20 K. 1. 185. 21

इति श्रीमहाभारते आदिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

---

कुमारी वरयिष्यति.

16 a) Ś1 Ñ1.2 V1 B D (except D5) तत्र; G1 M6-8 चात्र (for चैव). — b) G6 तत्र (for सूत-). M6-8 °मागधैः. — c) Ś1 नियोधयश्च; T1 निदेश°; T2 G3-5 निबोध°. — d) T1 समवेतान् (for समे°). B (except B6) D5 स्वयंवरं; D4 परस्परं (for महा°).

17 a) Ś1 एकं; T1 एतत् (for एवं). K4 S दृष्ट्वा (T1 तत्र) (for कृत्वा). — b) K4 S (except T1) भुक्त्वा (for दृष्ट्वा). — d) K1 पुरः प्रति-; T1 मात्रा सह; G6 रंगं प्रति-. K2 Da1 D1 T1 G2 M5 -निवर्त्स्यथ; K4 T2 -निवर्त्स्येथ; G1 -निवृत्स्यथ; G2-4 M8 -निवर्तेथ (M8 °त).

18 b) K0 S देवरूपानिव स्थि°. — d) K4 Ñ2 V1 B D (except D5) संगत्यैकतमं (D2 °रं); M °तरं. T G (except G1) M8 पतिं (for वरम्).

19 a) K2 T2 G M भ्राता च वः शीघ्रं; T1 एको हि वो भ्राता. — c) Ñ2.3 V1 B3.5 Dn D1.5 G3-5 नियुज्यमानो; G6 शूरस्यमानो. Ñ V1 B1 Dn विजये. — d) Ñ1.3 भवेत्; S महत् (for बहु). B5 संगत्यान्यतमं बलं (cf. 18d). — After 19, Ñ3 V1 D5 ins.:

1805* आहरिष्यत्ययं नूनं प्रीतिं वो वर्धयिष्यति ।

20 Ś1 K1-3 S om. उवाच. — a) K1 व्रजिष्यामो. T1 वयं सह गमि°; G3 परमं भोजयिष्यामि. — b) Ñ3 V1 B D चैव; G3-4 देशं; G6 दैवं (for देव-); cf. v. l. 1d, 11d. T1 द्रष्टुं तत्र स्वयंवरं. — cd) Ś1 K1 सर्वैः (for सर्वे). Ś1 K D5 पांचाल्यास्तं स्वयं°. T1 द्रौपदीं यज्ञसेनस्य कन्यां तस्यास्तथोत्सवं.

Colophon. T2 G1-5 read a col. after the first occurrence of this adhy. (i. e. after adhy. 157), and one also (after the second occurrence) here. M reads it only here (after the second occurrence), the first occurrence being embodied in our adhy. 158. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B3.5 Da Dn1.n3 D1.2.4.5 T2 G3.4 (the latter three both times) M8 द्रौपदीस्वयंवर: Ñ1.2 V1 B1 स्वयंवर. — *Adhy. name:* K0.4 पांडवप्रस्थानः (K4 °स्थापनः); Ñ1.3 V1 पांडवागमनं; T2 G3.4.6 ब्राह्मणसमागमः. — *Adhy. no.* (figures, words or both): Dn3 183; D4m 186; T1 165; T2 G3.4.5 (all first time) 117, and (all second time) 134; G1.2 (both first time) 119 and 115 respectively, and (both second time) 136; G6 M (at the second occurrence) 135. — *S'loka no.:* Dn M8 20. — *Aggregate s'loka no.:* Dn3 6916.

## 176

1 Ś1 K D2 S om. उवाच (K0 om. the ref.). — T1, which om. 1, repeats 1. 175. 1 here — a) Ś1 K (except K4) B1.3 Da D1 एवमुक्त्वा. — D4 (marg. *sec. m.*) S ins. after 1ab (T1, after the repetition of 1. 175. 1), a *repetition* of 1803* [ v. l.: T G सर्वे; M2 भूत्वा (for पार्थाः) ]; cf. 1. 55. 20. — c) S (T2 om.) राजन् (for राज्ञा). Ñ V1 B D5 G1.2 M8.6 °पंचालान्.

2 a) Ñ3 V1 D1 तेषु; B1.5 D4 ते च; Dn2.n3 ते सु; D2 स्वेनं (for ते तं). — c) N2 V1 B Dn D1.4.5 वीरा (for राजन्). — d) Ñ1.2 V1 B D (except Da D5) मुनिं (for पथि). A few MSS. तथा.

3 T2 om. 3-4. — a) M6-8 तस्मै यथैव.. K0 तस्मै पूजां यथार्हां च. — b) Ñ1 चक्रुस् (for कृत्वा). M2 रहसि (*inf. lin.* तेन च as in text). Ñ3 V1 B3.5 D सत्कृताः (*for* सान्त्विताः). — c) Ś1 K1 चाप्यनु°; D2 तदनु°. S (T2 om.) कथयित्वाम्य(G3 °प्य)नु°. — d) K0.2.4 द्रुपदं प्रति; Cd as in text.

4 T1 om. 4 (cf. v. l. 3). — b) K0.4 D5 वनान्युपवनानि च; T1 G6 सरांसि च वनानि च (by transp.). — c) M8.6 ते (for च).

